# GURUVAMSAKAVYA

BY

Kasi LAKSHMANA SASTRI

Edited by *Vidya Visarada, Vidvat-Sirobhushana*

Kunigal RAMA SASTRIGAL

*Dharmadhikari, Mysore State.*

Vol. I: Cantos 1—7.





——SRIRANGAM——

SRI VANI VILAS PRESS.





॥ श्रीः ॥

# ॥ गुरुवंशकाव्यम् ॥

विद्वद्बालककाशीलक्ष्मणशास्त्रिप्रणीतम् ।

प्रथमो भागः ।

सर्गाः १—७



श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रितम् ।

I

# PREFACE.

This is a hitherto unpublished work the manuscript of which was found in the library of the Sringeri Mutt at Sringeri. The printing of this book was commenced several years ago but when the first three sargas were completed it was found that there were several points of difference between the version of the life of Sri Sankaracharya found in this book and that already known to the public from the "Sankara Vajayas" now extant. Attempts were then made to find out from the records of the Mutt the authenticity of the different versions but after a long delay it was decided to publish the book as it is and leave the investigation into the authenticity of the different versions to research scholars. We shall rest satisfied with merely noting the chief points of difference found in this book. It is stated herein that Visvarupa and Mandana Misra were two different personages and that the former alone was won in discussion by the great Sri Sankaracharya who thereupon made him his disciple and named him as Suresvararya (Slokas 37–59 of Canto II). Further

we find that he established five Mutts at Benares (III. 23) and while tying to ascend the Sarvajna Peetha at Kashmir through its southern gate, the great teacher was invited by the unseen voice of the Goddess of learning (Sarasvati) for a discussion on the Sastras and when all the Sastras were exhausted the Goddess questioned the teacher on the Kama Sastra. It is then that Sri Sankara asked for and obtained some respite and gained experience in that Sastra also through the instrumentality of the body of King Amaruka. When the Goddess became pleased with him on account of his all-round proficiency she asked him to choose a boon and he wanted her to accompany him to the banks of the Tungabhadra for being permanently located there in the Mutt. After staying at Sringeri for some time he handed over his Puja to Visvarupa alias Suresvara and enjoined him to stay there for long, worshipping the Goddess Sarada. He then proceeded with his other disciples to Kanchi and founded there both the Siva Kanchi and the Vishnu Kanchi and consecrated the gooddess Kamakshi and afterwards proceeded to the Badari forest. He consecrated there the image of Narayana found immersed in the waters of the Alaka Nanda and enjoined his disciple

Padmapada to look after the construction of that temple (Canto III. Slokas 26—40). He then proceeded to Kasi and when Padmapada completed the construction of the Badari temple and invited him to look at it he went back to Badari and thence to Kashmir where, pleased with the Bhakti of the king of that place, he founded the town of Srinagar modelled after the Sri Chakra. He then enjoined Padmapada to proceed East to Jagannatha and preside over the Mutt there (III. 60). Hastamalaka was ordered to preside over the western Mutt at Dwaraka (III. 61) and Totaka was asked to look after the Northern Mutt (Jyotir Mutt) near Badari. (III, 62) After thus dispersing his four chief disciples he proceeded to Nepal to see Siddhesvari and performed some miracles there. Seeing that the object of his mission was fulfilled he abandoned his *danda* and *Kamandalu* which became transformed into a tree and river respectively and proceeded to the abode of Dattatreya to whom he recited his doings and stayed there in happy conversation with him (III. 70). This version varies considerably from the hitherto known versions of the life of this great Teacher. From the fourth canto onwards this Kavya begins to treat of the lives of the successors of Sri Sankara-

charya in the Sringeri Mutt and disposes of eight of them in the first thirteen slokas of the fourth canto. Then commences the life of Vidyatritha. From the twenty first sloka the author begins to sketch the life of the famous Vidyaranya who is stated herein to be entirely different from the two brothers Sayana and Madhava, the former of whom was then the minister of the king of Vijayanagar. When these two brothers first meet Vidyaranya they pray for issues to be born to them but by his omniscience Vidyaranya says that they were not destined to have any children. Then they entreat him to devise some means of salvation for them from the sin of childlessness and he, out of compassion, issues all his works on Vedas and Sastras in the name of these two brothers. Hence it is these works are known as Sayaneeya and Madhaveeya. (V—44) Sage Vidyaranya then proceeds to found the capital city of Vijayanagar and instals therein Harihara as the Emperor and all this is described in detail in Canto VI. Having firmly established the throne of Vijayanagar under King Harihara and after enjoining him to look after his Guru Vidyatirtha at Sringeri, sage Vidyaranya goes out again on Tirtha Yatra and stays at the sacred Kasi. The

Lambika-Yoga-Samadhi of Vidyatirtha is described in the last stanzas of the sixth Canto and the building of the wonderful temple over the Samadhi of Vidyatirtha otherwise known as Vidyasankara by the renowned architect Jakkana under the direction of Sage Bharati Krishna Tirtha and with the monetary help of King Bukka, the successor of King Harihara in the throne of Vijayanagar is detailed in Canto VII. On the completion of the construction and consecration of the temple of Vidyasankara news was sent to King Bukka and Sage Vidyaranya who then stayed at Benares. As soon as he heard the news Vidyaranya came over to Sringeri accompanied by King Bukka. After worshipping Vidyasankara and taking leave of the two sages, Bharati Krishna Tirtha and Vidyaranya, King Bukka returns to his capital and soon after Bharati Krishna Tirtha departs from this world leaving everything in the charge of Vidyaranya (VI—49). When he hears the news of the departure from this world of the Sage Bharati Krishna Tirtha, King Bukka also leaves off his mortal coil and here ends the seventh Canto with which this first part closes. Thus it will be observed that this work contains several interesting episodes in the lives of Sri

Sankaracharya and Sri Vidyaranya and we leave it to our readers to judge of the historicity of the statements contained herein. This work is said to have been written by one Kasi Lakshmana Sastry who was a Pandit in the court of Sri Sacchidananda Bharati Swami, the fourth predecessor of the present occupant of the Sringeri Peetha. As the book has been long in the Press owing to various causes, the proofs have gone through different hands and thus several mistakes have crept in, which we hope to rectify in the second edition. The second part also will be issued at an early date. Our thanks are due to Brahmasri, Vidvatsirobhushana, Vidya Visarada K. Ramasastrigal, Dharmadhikari of Mysore State for his invaluable help in the matter of bringing out this rare work.

*J. K. Balasubrahmanya Aiyar.*



॥ श्रीः ॥

# ॥ गुरुवंशकाव्यम् ॥



ध्यायं ध्यायं गणेशं वरदमनुपमां शारदां च प्रसन्नां
वन्दे श्री शंकरार्यप्रमुखगुरुमहावंशवार्धौ विवृद्धम् ।
कीर्तिश्रेयस्तरङ्गे महिममणिगणे नित्यलक्ष्मीनिवासे
विद्याज्योत्स्नाप्रसारैर्विबुधहितकरं सच्चिदानन्दचन्द्रम् ॥

स्वकीयगुरुवंशस्य व्याख्या लक्ष्मणशास्त्रिणा ।
संक्षेपेण सतां प्रीत्यै क्रियते भावबोधिनी ॥

प्रायेणान्वयमार्गेण व्याख्यायत इयं कृतिः ।
प्राचामसंमतं नैव लिख्यतेऽत्र न चाधिकम् ॥

इह खलु जगति निखिलजनसमभिलषितसकलपुरुषार्थमुख्यसाधनमतिमात्रदुस्तरसंसारसलिलनिधिसमुल्लोलकल्लोलकलुषितकांदिशीकशरण्यसद्गुरुवरेण्यचरणसरसिजपरिचरणमेव निश्चित्य परिहृतपरःशतपरमतविहरदपरिमितशिष्यजनशंकरमानुषशंकरशंकराचार्ययमिवर्याः

विशुद्धवैदिकाद्वैतसिद्धान्तरहस्यार्थोपदेष्टार एत एव सद्गुरुवरा इति विचार्य तच्छात्रपरंपरासच्चरित्रवर्णनभव्यमहाकाव्यं कुर्वाणो निर्विघ्नपरिसमाप्त्यर्थं विघ्नराजपुरस्कारपूर्वकं आशीरात्मकं मङ्गलम् उपनिबध्नाति ॥

**स्वस्ति श्रीगजवदनस्तनोतु भक्ता-**
**नाह्वातुं श्रुतियुगलं पुरोविलोलम् ।**
**विघ्नौघान्विगमयितुं पुनश्च पश्चा-**
**त्कुर्वाणः प्रणतहितार्पणे प्रवीणः ॥ १ ॥**

**स्वस्तिश्रीति ।** प्रणताः प्रकर्षेण नताः नमस्कर्तारः । आदिकर्मणि क्तः कर्तरि चेति कर्तरि क्तः । तेषां हितस्य अभीष्टस्य अर्पणे दाने प्रवीणः निपुणः । भक्तानाह्वातुं आकारयितुम् । श्रुतियुगलं कर्णयुग्मम् । पुरः पुरस्तात् । विलोलं चञ्चलम् । पुनश्च । विघ्नौघान् विघ्नराशीन् । विगमयितुं दूरीकर्तुम् । पश्चाच । विलोलम् । कुर्वाणः । श्रीगजवदनः गजवदनमिव वदनं अस्य इति तथोक्तः, गणेशः । प्रकरणान्न इति अध्याह्रियते । स्वस्ति मङ्गलम् । तनोतु विस्तृणोतु । तनु विस्तार इति धातोः आशिषि लोट् । कर्णलौल्यस्य भक्ताह्वानविघ्नपरिहाररूपफलोत्प्रेक्षा । दयावीरश्च रसः । भक्तानाकार्य-विघ्नं वारयामीति स्वत एव सूचनात् । 'मः संपदं वितनुते न गणो यशांसि' इति वाणीभूषणोक्तरीत्या मगणनगणौ श्रेयस्करावेव प्रथमश्लोकादावुपात्तौ । तथैव स्वस्तिश्रीशब्दावपि भद्रवाचकौ प्रयुक्तौ । इदं च महाकाव्यम । तदुक्तं साहित्यदर्पणे । 'सर्गबन्धो महाकाव्यं

तत्रैको नायकः स्मृतः । शृङ्गारवीरशान्तानामेकोऽङ्गीरस इष्यते ॥'
इत्यादि । सर्गेऽस्मिन् प्रहर्षिणीवृत्तम् । म्नौज्रौगस्त्रिदशयतिः प्रहर्षिणीयमिति लक्षणात् ॥ १ ॥

उमामहेशस्मरणपूर्वकं स्कन्दं प्रार्थयते—

**विद्यायां मम पितरौ गुरू भवेतं**
**षड्वक्त्राण्यपि सफलानि सन्तु नान्यम् ।**
**यामीति स्ववचनलब्धहर्षपित्रो-**
**रासन्नो दिशतु शुभानि मे षडास्यः ॥ २ ॥**

**विद्यायामिति** । हे पितरौ मातापितरौ भवानीशंकरौ । पुमांस्त्रियेत्येकशेषः । युवां । विद्यायां विद्याभ्यासविषये । मम । गुरू भवेतम् । भवतेः प्रार्थनायां लिङि मध्यमपुरुषद्विवचनम् । मम षड्वक्त्राणि अत एव सफलानि । सन्तु भवन्तु । तयोर्मुखसंख्यायां षट्त्वं द्योत्यते । तदुक्तं शंकरसंहितायां— 'पञ्चकृत्यपरश्चायं पञ्चवक्त्रः सदाशिवः । एकवक्त्रासि बहुधा भिन्नासि परमेश्वरि । त्वन्मयो मन्मयो यस्मात् षड्वक्त्रः परिकीर्तितः' इति । अन्यं विद्याभ्यासाय न यामि । मुखषट्कराहित्यादिति भावः । इति स्वस्य आत्मनः स्कन्दस्य वचनेन लब्धहर्षयोः प्राप्तसंतोषयोः पित्रोः । आसन्नः समीपवर्ती । प्रेमातिशयद्योतनाय स्वपदोपादानम् । षडास्यः षण्मुखः । मे मह्यम् । शुभानि मङ्गलानि । दिशतु ददातु । **काव्यलिङ्गालङ्कारो** ध्वन्यते ॥ २ ॥

शारदाम्बां प्रार्थयते—

संख्यातुं भजकवरान् सुधां प्रदातुं
संप्रीत्या धियमखिलाः कलाश्च सद्यः ।
अक्षस्रक्कलशसुबोधपुस्तकश्री-
हस्तैषा मम हृदि शारदा सदास्ताम् ॥ ३ ॥

संख्यातुमिति । भजकवरान् भक्तश्रेष्ठान् । संख्यातुं गणयितुम् । अनन्तेषु भक्तेषु सत्सु सुधादिदानयोग्या एव गण्यन्त इति भावः । तेभ्यः भक्तश्रेष्ठेभ्यः सुधां अमृतम् । धियं ज्ञानम् । अखिलाः समग्राः कलाः विद्याश्च । प्रदातुमिव । अक्षस्रक्कलशसुबोधपुस्तकश्रीहस्ता अक्षस्रक् अक्षमाला कलशः अमृतकलशः सुबोधश्चिन्मुद्रा पुस्तकश्रीः पुस्तकसंपत् ताः हस्तेषु यस्याः सा तथोक्ता । हस्तेषु क्रमेण ऊर्ध्वदक्षिणवामयोः अधोदक्षिणवामयोरपीति बोध्यम् । उक्तं च प्रपञ्चसारे । 'अक्षस्रक्कुंभचिन्तालिखितवरकराम्' इति । एषा शारदा । मम हृदि । सदा । आस्तां तिष्ठतु । गम्यफलोत्प्रेक्षा ॥ ३ ॥

वाणीं स्वां सफलयितुं यथामनीषं
कुर्वे श्रीगुरुकुलवृत्तपूर्णकाव्यम् ।
दोषाणामपि सुगुणीकृतौ प्रवीणा
वात्सल्यात्कृतिन इदं विलोकयन्तु ॥ ४ ॥

वाणीमिति । स्वाम् आत्मीयाम् । वाणीं वाचम् । सफलयितुं

सफल्यं कर्तुम्, तत्करोतीति णिच् । यथामनीषं यथामति, यथासादृश्य इत्यव्ययीभावः । श्रीगुरुकुलवृत्तपूर्णकाव्यं श्रीमतां शंकरादीनां गुरूणां कुलस्य छात्रपरंपरायाः वृत्तैः चरित्रैः, 'वृत्तं पद्ये चरित्रे त्रिषु' इत्यमरः, पूर्णं काव्यम् । कुर्वे विदधे । दोषाणामपि श्रुतिकटुत्वादिदोषाणामपि । सुगुणीकृतौ सुगुणीकरणे । प्रवीणाः कुशलाः । कृतिनः प्राज्ञाः । इदं काव्यम् । वात्सल्यात् । विलोकयन्तु । मतेः प्रमादप्रायत्वेन दोषानपि गुणीकुर्वन्त्विति ग्रन्थकर्ता प्रार्थयत इति भावः ॥ ४ ॥

**गम्भीरं क नु गुरुवंशसच्चरित्रं**
**बालोऽहं क च जडबुद्धिरेकवक्त्रः ।**
**स्वर्णाद्रिं करतुलया मिनोमि मोहा-**
**दम्बोधेः परिमितिमादधे करेण ॥ ५ ॥**

**गम्भीरमिति** । गम्भीरम् अगाधम् । गुरुवंशस्य सत् प्रशस्तं चरित्रम्, 'प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः । क नु कियद्दूरे अस्ति । जडबुद्धिः प्रज्ञारहितः । एकवक्त्रः मुखसहस्रेणापि वक्तुमशक्यम् इति भावः । बालः प्रौढिरहितः । अहम् । क चादिनानेन कवेर्गर्वाभावः सूचितः। ईदृगप्यहं कुर्वे इति यत्करणं तत् करतुलया कर एव तुला तया । स्वर्णाद्रिं मेरुम् । मोहात् अज्ञानात् । मिनोमि एतावानिति जानामि । किं च अम्बोधेः । परिमितिं दैर्घ्यावधिम् । करेण चतुर्विंशत्यङ्गुलात्मकमानसाधनेन । 'चतुर्हस्तमितो दण्डश्चतुर्विंशाङ्गुलिः करः' इत्यागमे । आदधे करोमि । इति तन्मानं परि-

मित्याधानं च तयोः साजात्यादैक्यारोपः । ललितालंकारः ॥ ५ ॥

स्वग्रन्थस्य सार्थक्यं नियमेन समर्थयते—

आर्याणां कुलमुपदर्शितं कवीन्द्रैः
प्रस्तोतुर्मम वचसो मनाक्प्रचारः ।
वात्सल्यस्नुतममृतं जवेन पातुं
वत्सस्योपगतिरिवास्तु सौरभेय्याः ॥ ६ ॥

आर्याणामिति । कवीन्द्रैः आनन्दगिरियतीन्द्रादिभिः । उपदर्शितं प्रकटीकृतम् । आर्याणां श्रीमदाचार्यादीनाम् । कुलं परंपराम् । प्रस्तोतुः प्रकर्षेण स्तोतुः । मम । मनाक् ईषत् । वचसो वाचः । प्रचारः प्रसरणम् । वात्सल्यस्नुतं वात्सल्येन स्नुतं प्रस्नुतम् । सौरभेय्याः गोः । अमृतं क्षीरम् । जवेन वेगेन । पातुं गृहीतुम् । वत्सस्य । उपगतिरिव समीपगमनमिव । अस्तु भवतु । सौरभेय्याः आर्याणां कुलस्य अमृतस्य वात्सल्यकवीन्द्रयोः स्ववत्सयोश्च बिम्बप्रतिबिम्बभावः । स्नुतोपदर्शितपदार्थयोः वस्तुप्रतिवस्तुभावः । पूर्णोपमा ॥ ६ ॥

एवं षड्भिः श्लोकैः मङ्गलप्रतिज्ञादिकं विरचय्य प्रकृतवर्णनोपयुक्तं इतिहासं वक्तुमुपक्रमते ।

सन्मार्गं प्रकटयिता समस्तलोका-
न्सञ्चाराद्विमलहिता त्रिकालवेदी ।

स्वर्लोकाद्भुवमवतीर्य भूरिभेदा-
न्मर्त्यौघांश्चिरमथ नारदो ददर्श ॥ ७ ॥

**सन्मार्गमिति** । अथ शब्दः कथारम्भे मङ्गलार्थः । सतां मार्गः सन्मार्गः तम् । प्रकटयिता प्रकाशयिता । समस्तलोकान् सञ्चारात् विमलयिता विमलान् कुर्वाणः । त्रिकालवेदी त्रिकालज्ञः । नारदः महर्षिः । स्वर्लोकाद्भुवमवतीर्य । भूरिभेदान् बहुप्रकारान् । मर्त्यौघान् मानवसमूहान् । चिरं बहुकालम् । ददर्श । नराणां समूहो नारं तत् दायति शोधयतीति नारदः इति व्युत्पत्त्या साभिप्रायत्वात् **परिकराङ्कुरः, परिकरोऽपि** ॥ ७ ॥

दुर्वृत्तैर्विविधमतेषु साभिमानै-
र्व्यत्यस्तश्रुतिवचनार्थवादशीलैः ।
संकीर्णां क्षितिमवलोक्य सत्यलोकं
गत्वैष द्रुहिणमिदं वचो जगाद ॥ ८ ॥

**दुर्वृत्तैरिति** । एषः नारदः । विविधमतेषु ऐन्द्राद्यनेकप्रकारमतेषु । साभिमानैः अभिमानम् अहंकारः तेन सहितैः । व्यत्यस्तश्रुतिवचनार्थवादशीलैः व्यत्यस्ताः विपर्यासिताः श्रुतिवचनानां वेदवाक्यानां अर्थाः यैस्ते ते च ते वादशीलाश्च तैः । अत एव दुर्वृत्तैः दुश्चरितैः जनैः । संकीर्णां क्षितिम् अवलोक्य सत्यलोकं गत्वा । द्रुहिणं ब्रह्माणं इदं वक्ष्यमाणं । वचः वाक्यं । जगाद उवाच ।

गतिबुद्धीत्यादिना शब्दकर्मत्वाद्द्विकर्मकत्वम्, गतव्यक्तायां वाचीति धातोर्लिट् ॥ ८ ॥

लोकेशाकलय कलेर्बलेन लोका
भूलोके बत समहासिषुः स्वधर्मान् ।
सर्वांस्तान्न कथयितुं क्षमे खलौघा-
न्संक्षेपाज्जनक वदाम्यथापि कांश्चित् ॥ ९ ॥

**लोकेशेति** । लोकानां ईशः लोकेशः तस्य संबोधनम्, लोकेश । आकलय जानीहि । कलेः कलिपुरुषस्य । बलेन । लोकाः जनाः । स्वधर्मान् । समहासिषुः समत्याक्षुः । बतेति खेदे समुपसृष्टात् ओहाक्त्यागे इति धातोः लुङि च्लौ च्लेस्सिजिति सिचि यमरमेति सगागमे इडागमे च सिजभ्यस्तेति झेर्जुसि च, रूपं— सर्वांस्तान् । खलौघान् दुर्जनसमूहान् । कथयितु वक्तु न क्षमे न शक्नोमि न शक्तो भवामि । जनक हे पितः, मानसपुत्रत्वात् नारदस्य पितरिति संबोधनम् । अथापि कांश्चित् तान् । संक्षेपेण । वदामि । असहमान इति भावः । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति आक्षेपः ॥ ९ ॥

तानेव कांश्चिद्विवृणोति—

केऽप्यैन्द्रा दधति सदैव वज्रमालां
देवेन्द्रं निखिलजगन्निदानमाहुः ।
सेवन्तेऽपि च तमुपेन्द्रमुख्यदेवाः
कैवल्यं किल तदभेदबोधमूलम् ॥ १० ॥

**केऽपीति** । ऐन्द्राः इन्द्रोपासकाः सास्यदेवतेत्यण् । केचन जनाः । सदैव । वज्रमालां वज्रमणिरचितमालिकां । दधति धारयन्ति, दधातेरदभ्यस्तादित्यत् । किंच देवेन्द्रं । निखिलजगन्निदानं सकलजगतः आदिकारणम। 'इन्द्रो राजा जगतो य ईशे' इति श्रुतेः। आहुः ब्रुवन्ति । अपि च, उपेन्द्रमुख्यदेवाः विष्णुमुख्या देवाः तं देवेन्द्रम्। सेवन्ते । उपेन्द्रेत्युपसमीपे । इन्द्रस्येति व्युत्पत्त्या सूच्यार्थसूचनान्मुद्रालङ्कारः । कैवल्यं मुक्तिः तदभेदमूलं तस्य देवेन्द्रस्य अभेदः अद्वैतं तद्बोधः तज्ज्ञानं तदेव मूलं यस्य तत् । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति 'सेन्द्रः सोऽक्षर' इति च मानम् ॥१०॥

**आहुः केऽप्यहरधिपं जगत्प्रसूतिं**
**ब्रह्माद्यैस्त्रिदशवरैः समर्चितं च ।**
**किं चार्कप्रतिभटतप्तलोहमुद्रां**
**धृत्वार्चां विदधति रक्तसिक्तगन्धैः ॥ ११ ॥**

**आहुरिति** । केऽपि सौरा इत्यर्थः । अहरधिपं अह्नां अधिपः अधीशः सूर्यः तमित्याशयः । तं कीदृशं जगत्प्रसूतिं जगतां स्वर्गभूपातालल्लोकरूपाणां प्रसूतिं कारणमित्यर्थः । किं च ब्रह्माद्यैः ब्रह्मा चतुर्मुखः स एव आद्यः येषां ते त्रिदशवराः इन्द्रादयः तैः । समर्चितं पूजितमित्यर्थः । तथा चोक्तं भविष्यत्पुराणे 'ब्रह्मेन्द्रनारायणरुद्रवन्दितः स नः सदा पातु शुभावहो रविः' इति । आहुः जगदुः । किं चेति । अर्कप्रतिभटतप्तलोहमुद्रां अर्कस्य तन्मण्डलस्य प्रतिभटा सदृशी लोहमयी मुद्रा लोहमुद्रा अर्कप्रतिभटा च तप्ता च सा या लोहमुद्रा

तामित्यर्थः । धृत्वेति । भुजयोरित्यादिः । रक्तसिक्तैः असृगुक्षितैरित्यर्थः । गन्धैरित्यक्षतादेरुपलक्षणम् । अर्चां पूजां । कुर्वते आतन्वते ॥

**नागास्यं कतिचन सर्वसर्गहेतुं**
**जानन्तस्तदितरदेवसेवनं तु ।**
**त्यक्त्वाङ्कं भुजतलयोस्तदीयपाणेः**
**कुर्वाणा द्रुहिण चरन्ति भूमिभाराः ॥ १२ ॥**

**नागास्यमिति** । कतिचन गाणापत्या इत्यर्थः । नागास्यं नागस्य गजस्य आस्यं इव मुखं यस्य तम् । महागणपतिमिति यावत् । सर्वसर्गहेतुं सर्वस्य सृज्यत इति सर्गः प्रपञ्चः तस्य हेतुं निदानम् । जानन्तः मन्वानाः । तदितरदेवसेवनं तस्मात् महागणेशात् इतरे भिन्नाः देवाः ब्रह्मविष्ण्वादयः तेषां सेवनं भजनम् । त्यक्त्वा विहाय किंच भुजतलयोः अंसाधःप्रदेशयोः । तदीयपाणेः तदीयः महागणेशसंबन्धी पाणिः शुण्डादण्डः तस्य । अङ्कं चिह्नम् । कुर्वाणाः दधाना इति यावत् । भूमेः पृथिव्याः भाराः सहनायोग्याः । पाषण्डत्वादित्याशयः । द्रुहिणेति संबोधनम् । चरन्ति स्वैरं चरन्तीत्यर्थः ॥

**मत्वोग्रं सकलफलप्रदानदक्षं**
**विप्राणां सपदि शिरांसि कर्तयित्वा ।**
**तैरर्चां विदधति भैरवस्य केचित्**
**हा नष्टा श्रुतिसरणिस्तु तात तिष्ये ॥ १३ ॥**

**मत्वेति** । केचित् कापालिकाः उग्रं भयङ्करम् । अभक्तानामित्यादिः । तदुक्तम्—'शिवः शिवानामशिवोऽशिवानाम्' इति । भैरवमिति यावत् । सकलफलप्रदानदक्षं सकलानि च फलानि धर्मार्थादीनि तेषां प्रदाने वितरणे दक्षं समर्थम् । मत्वा ज्ञात्वा । विप्राणां ब्राह्मणानाम् । सपदि शीघ्रम् । शिरांसि शीर्षाणि । कर्तयित्वा छित्त्वा । तैः कृत्तविप्रशिरोभिः । अर्चां होमरूपाम् । भैरवस्य महाकपालिनः । विदधति समाचरन्ति । तात इति संबोधनम् । तिष्ये कलियुगे । श्रुतिसरणिः श्रुत्युदितपद्धतिः । नष्टा उत्सन्नतां गता । हेति निर्वेदे ॥

**कालीं केऽप्यखिलजगन्निदानभूतां**
**ज्ञात्वास्या द्विजकुलजातजन्मनोऽपि ।**
**मांसाद्यैर्वत रचयन्ति पूजनं भोः**
**किं ब्रूयां कलियुगजातलोकदौःस्थ्यम् ॥**

**कालीमिति** । केऽपि शाक्ता इत्यर्थः । कालीं मूलप्रकृतिमिति यावत् । अखिलजगन्निदानभूतां अखिलस्य चराचरस्य जगतः विश्वस्य निदानभूतां मूलकारणभूताम् । ज्ञात्वा मत्वा । अस्याः महाकाल्याः । मांसाद्यैः मांसं आद्यं येषां तानि मांसाद्यानि तैः । आद्यपदेन मद्यादिपरिग्रहः ; एतेन वाममार्गः प्रदर्शितः । तन्मते हि—द्वौ मार्गौ वामो दक्षिणश्चेति दक्षिणः । तत्र क्षीराद्यैः, वामस्तु पूर्वोक्तैः । पूजनं सपर्याम् । द्विजकुलजातजन्मनोऽपि ब्राह्मणा अपीत्यर्थः । एतेन वामः शूद्राणां न दोषावह इति ध्वन्यते । तथा चोक्तं कालिदासेन लघुस्तुतौ— 'विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः'

इति । रचयन्ति कुर्वन्तीत्यर्थः । भोः इति संबोधने । कलियुगजातलोकदौःस्थ्यं कलियुगे जाताः उत्पन्नाः लोकाः जनाः तेषां दौःस्थ्यं दुर्दशाम् अमार्गप्रवृत्तिरूपामित्यर्थः । किं ब्रूयां किं वर्णयामि । वक्तुमशक्यमिति यावत् ॥ १४ ॥

**कर्मैव प्रभवति सर्वसौख्यदाने**
**नैवेशः फलद इहेति केचिदज्ञाः ।**
**किं चेशोऽप्यखिलसमत्वरक्षणार्थं**
**कर्मैव प्रबलतरं समीहते हि ॥ १५ ॥**

**कर्मेति** । केचित् कर्मजडाः मीमांसका इत्यर्थः । सर्वसौख्यदाने सर्वेषां अखिलानां सौख्यानां स्वर्गादीनां इदमुपलक्षणं दुःखादीनां दाने वितरणे । कर्मैव यागविप्रहत्यादिरूपक्रियैव प्रभवति समर्थं भवतीत्यर्थः । ईशः ईश्वरः फलदः फलदाता । नैव । इह अस्मिन् लोके । किं चेति । ईशोऽपि ईश्वरोऽपि । इदं परमतमभ्युपेत्य तन्मते ईश्वरस्यैवाभावात् । अखिलसमत्वरक्षणार्थं वैषम्यनैर्घृण्यनिवारणायेत्यर्थः प्रबलतरं मुख्यकारणम् । कर्मैव । समीहते हि अपेक्षते हि । इति एवं प्रकारेण । अज्ञाः वेदशास्त्रतात्पर्यानभिज्ञा इत्यर्थः । अज्ञत्वं निरीश्वरवादित्वात् वदन्तीति शेषः । अत्रायमाशयः । स्वतन्त्रश्चेज्जगतः कर्ता ईश्वरः अभ्युपगम्यते तदा तस्य रागद्वेषादिराहित्यस्य ईश्वरत्वसमर्थनाय अवश्याभ्युपेयतया कांश्चिद्दुःखभाजः कांश्चित् सुखभाजः नरान्न कुर्यात् । दृश्यन्ते च केचिदत्यन्तदुःखिनः, केचिच्च मध्यमाः । एवं केचिदत्यन्तसुखिनः, केचिच्च मध्यमाः । अतः अनादौ संसारे

वभ्रम्यमाणानां जीवानां प्राक्तनानि कर्माण्यादायैव विषमेयं सृष्टिः । न त्वीश्वरस्य वैषम्यनैर्घृण्ये । इति वाच्यम् । तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम् । 'वैषम्यनैर्घृण्ये सापेक्षत्वात्तथाहि दर्शयति' इति । इत्थं च अवश्यापेक्षणीयकर्मणामेव फलदातृत्वसंभवेन अलमीश्वरेणेति ॥ १५ ॥

**लक्ष्मीशं विधृतसुदर्शनादिचिह्नाः**
**सेवन्ते तदितरदेवता विहाय ।**
**त्यक्त्वान्ये पितृमृतिकालसंविधेयं**
**तन्वानाः पशुमपि पैष्टमेव यज्ञे ॥ १६ ॥**

**लक्ष्मीशमिति** । अन्ये वैष्णवाः । विधृतसुदर्शनादिचिह्नाः शङ्खचक्राकारतप्तलोहमुद्राभिः दोर्मूलादिष्वङ्किता इति यावत् । तदितरदेवताः तस्माद्विष्णोः इतराः भिन्नाः शिवादिरूपाः देवताः विहाय । तासु पूज्यताबुद्धिं त्यक्त्वा । किंच । पितृमृतिकाले एकादश्यादि तिथ्यात्मके । संविधेयं यथोक्तविधिना कर्तव्यब्राह्मणभोजनादिकम् । त्यक्त्वा विसृज्येत्यर्थः । एतेन श्रुतिस्मृत्युल्लङ्घनमभिहितम्, केवलश्रुत्युल्लङ्घनमप्याह । यज्ञे ज्योतिष्टोमादिरूपे श्रुत्या प्राप्तं प्रत्यक्षपशुं हित्वा पैष्टमेव पशुं पाशवे प्रयोगे तन्वाना उपयोक्ष्यन्तः । लक्ष्मीशं कमलानायकं नारायणं सेवन्त इत्यन्वयः ॥ १६ ॥

**लिङ्गाङ्काः पशुपतिभिन्नदेववर्गं**
**निन्दन्तः कतिचन तत्र बाहुमूले ।**

वक्षस्यप्यनिशमहो धृतेशलिङ्गाः
पाषण्डा धरणितले चरन्ति तात ॥ १७ ॥

लिङ्गाङ्का इति ॥ धरणितले भूलोके । पाषण्डाः शैवपाषण्डाः । तदेव विशिनष्टि । लिङ्गाङ्काः शिवलिङ्गाकारतप्तलोहमुद्रितभुजतटा इति यावत् । तथा पशुपतिभिन्नदेववर्गं पशुपतिः महादेवः तद्भिन्नदेववर्गं विष्ण्वादितदितरदेवतासमूहम् । निन्दन्तः निन्दां कुर्वन्तः । एतेन तत्कृतशिवपूजादीनां वैफल्यं फलितम् । तथा चोक्तम्—'मद्भक्तः शंकरद्वेषी मद्द्वेषी शंकरप्रियः । तावुभौ नरकं यातो यावच्चन्द्रदिवाकरम्' इति । तत्र पाशुपतपाषण्डेषु मध्ये कतिचन केचन । बाहुमूले दोर्मूले । वक्षस्यपि हृदयेऽपि । अनिशं सर्वदा । धृतेशलिङ्गाः संधारितशिवलिङ्गाः सन्तः । चरन्ति विहरन्ति । तात इति संबोधनम् । अहो इत्याश्चर्यं ॥ १७ ॥

प्रामाण्यं श्रुतिषु बलान्निवारयन्तो
निन्दन्तो निगमविधेयकर्मजातम् ।
जैनाद्यास्त्रिजगति नैव सन्ति देवा
इत्येवं शिवशिव साहसाद्वदन्ति ॥ १८ ॥

प्रामाण्यमिति । श्रुतिषु वेदेषु । प्रामाण्यम् । बलान्निवारयन्तः । निगमविधेयं कर्मजातं वेदादिकर्मसमूहम् । निन्दन्तः । जैनाद्याः आदिशब्देन चार्वाकादय उच्यन्ते । त्रिजगति देवा न सन्त्येवेति साहसात् वदन्ति । शिवशिवेति खेदे ॥ १८ ॥

आचारे भुवि मनुजा यथेच्छचाराः
प्रोज्झन्तो निजनिजवृद्धसच्चरित्रम् ।
संकीर्णान्विदधति हन्त सर्वधर्मा-
न्सर्वांस्तान्सुविहितबोधनेन शाधि ॥ १९ ॥

आचारेति । हे ईश । भुवि भूलोके । मनुजाः मानवाः । आचारे । यथेच्छचाराः यथेच्छं चरन्तीति यथेच्छचाराः । निजनिजवृद्धसच्चरित्रं निजनिजानां स्वकीयस्वकीयानां वृद्धानां सच्चरित्रम् । प्रोज्झन्तः प्रकर्षेण उज्झन्तः त्यजन्तः । सर्वधर्मान् समस्तान् धर्मान् विधीन । संकीर्णान् मिश्रितान्, अधर्मेणेति स्वत एव संबध्यते । विदधति कुर्वन्ति । हन्तेति खेदे । तान् सर्वान् । सुविहितबोधनेन सुष्ठु विहितस्य कर्मणः बोधनेन । शाधि शिक्षय ॥ १९ ॥

सर्वांस्तानपि चतुरास्य शासितुं द्राक्
याचे त्वां सपदि विचिन्त्यतामुपायः ।
इत्युक्तो विधिरथ नारदं बभाषे
युक्तं तन्मुनिवर सर्वथा विधेयम् ॥ २० ॥

सर्वानिति । हे चतुरास्य । सर्वान् तान् खलान् । द्राक् । शासितुं शिक्षितुम् । याचे । सपदि । उपायः शिक्षासाधनम् । विचिन्त्यताम् । त्वयेति शेषः । इत्युक्तो विधिः ब्रह्मा । अथ अनन्तरम् । हे मुनिवर तत् त्वदुक्तं वचः । सर्वथा विधेयं युक्तम् इति नारदं प्रति बभाषे उवाच ॥ २० ॥

अत्रार्थे कुशलमतिः क्षणं विचार्य
क्षोणीभृद्दुहितृपतेरगात्समीपम् ।
नत्वा तं परमशिवं प्रसन्नवक्त्रं
संतोषादथ चतुराननो नुनाव ॥ २१ ॥

अत्रेति । अत्रार्थे उपायचिन्तनेऽर्थे कुशलमतिः ब्रह्मा । क्षणं क्षणमात्रम् । विचार्य भाविकार्यं समालोच्य । क्षोणीभृद्दुहितृपतेः शिवस्य । समीपम् अगात् । एतेर्लुङि गादेशः । अथ चतुराननः प्रसन्नवक्त्रं तं परमशिवम् । नत्वा नमस्कृत्य । संतोषात् । नुनाव तुष्टाव ॥ २१ ॥

अथ सप्तभिः श्लोकैः शिवमेव विशिनष्टि---

कन्दर्पप्रविजयकाल एव चात्तं
तन्मित्रं तदुदितचिन्तया सकार्श्यम् ।
शुभ्रांशुं क्वचिदपि वासनाय लोका-
विश्वासाद्धृतमिवात्मशीर्ष एव ॥ २२ ॥

कन्दर्पेति । कन्दर्पप्रविजयकाल एव कन्दर्पस्य कामस्य प्रविजयः पराभावनं तस्मिन् काल एव । आत्तं गृहीतम् । तन्मित्रं तस्य कामस्य मित्रं सुहृदम् । तदुदितचिन्तया पराभवजनितचिन्तया । सकार्श्यम् । शुभ्रांशुं चन्द्रम् । लोकाविश्वासात् सर्वेषामपि मन्मथसंबन्धित्वेन शङ्कास्पदत्वात् । आत्मशीर्ष एव आत्मनः स्वस्य शिरस्येव ।

दधतं धारयन्तमिव । तं परमशिवं नुनावेति पूर्वेणान्वयः । उत्प्रेक्षालंकारः ॥

स्वाकारस्मरणकृतामयत्नगङ्गा-
ध्यानश्रीवृषघटनाय तां दधानम् ।
निःसाम्ये स्ववपुषि नित्यसङ्गहर्षा-
दन्योन्यप्रणयसुसङ्गतालकेषु ॥ २३ ॥

स्वाकार इति । स्वस्य आकारः गङ्गाधरत्वजटिलत्वादिविशिष्टा मूर्तिः तस्याः स्मरणकृताम् । अयत्नम् अप्रयत्नम् । गङ्गाध्यानश्रियः गङ्गाध्यानसंपदः यो वृषः धर्मः तस्य घटनाय प्रापणाय । तां गङ्गाम् । निःसाम्ये अनुपमे । स्ववपुषि । नित्यः नाशरहितः यः सङ्गः संबन्धः तस्मात् हर्षात् । अन्योन्यप्रणयसुसङ्गतालकेषु अन्योन्यप्रणयेन परस्परस्नेहेनेव सुसङ्गतेषु सुष्टु संबद्धेषु अलकेषु केशेषु । दधानं धरन्तमित्युत्प्रेक्षा ॥

संप्रीत्या शशिनि समाश्रिते तदङ्कं
निह्नोतुं गरलमिषाद्गले दधानम् ।
बिभ्राणं भजकवशीकृतेष्टभूतिं
तद्भूतिक्रियफणभोगिनोऽपि भूरि ॥ २४ ॥

संप्रीत्येति । संप्रीत्या । समाश्रिते । शशिनि । तदङ्कं तस्य चन्द्रस्य अङ्कं कलङ्कम् । निह्नोतुम् अपह्नोतुम् । गरलमिषात् विषव्याजात् । गले कण्ठे । दधानमिवेत्युत्प्रेक्षा । भजकानां भक्तानां वशीकृतये

वशीकरणाय इष्टां भूतिं विभूतिं च । तद्भूतिक्रियफणभोगिनोऽपि तेषां भक्तानां हूतिः आह्वानमेव क्रिया व्यापारः यासु तथाविधाः फणा येषां ते तथोक्ता भोगिनः तान् । भूरि बहून् । दधानम् ॥

कैलासाचलमिव धातुमेघजुष्टं
व्याघ्रेभाजिनयुगलं तनौ दधानम् ।
स्वीयाङ्घ्रिद्वयभजनेन सर्वसिद्धिं
भक्तानां वरदकरेण दर्शयन्तम् ॥ २५ ॥

**कैलासेति** । व्याघ्रेभाजिनयुगलं व्याघ्रेभौ तयोः अजिनयोः युगलं युग्मम् । तनौ शरीरे । दधानम् । अत एव धातुमेघजुष्टं धातुभिः गैरिकादिभिः मेघैश्च जुष्टं संबद्धम् । कैलासाचलमिव स्थितम् । वरदकरेण वरदानमुद्रावत्करेण । स्वीयाङ्घ्रिद्वयभजनेन स्वीयस्य अङ्घ्रिद्वयस्य भजनेन सेवनेन । भक्तानां सर्वसिद्धिं दर्शयन्तमिवेत्युत्प्रेक्षा ॥ २५ ॥

सद्भक्ताहितलवनार्थमात्तदीक्षं
बिभ्राणं परशुवरं च दक्षहस्ते ।
स्वाधीनीकृतपतिशैलजाक्षिलौल्या-
भ्यासार्थं समुपगतं मृगं धरन्तम् ॥ २६ ॥

**सदिति** । सद्भक्ताहितलवनार्थं सन्तश्च ते भक्ताश्च तेषां अहिताः शत्रवः तेषां लवनार्थं छेदनार्थम् । आत्तदीक्षं गृहीतदीक्षम् । परशु-

वरं दक्षहस्ते बिभ्राणं धरन्तम् । स्वाधीनीकृतपतिशैलजाक्षिलौल्याभ्या-मार्थं स्वाधीनीकृतः पतिः यया तथा भूतायाः शैलजायाः पार्वत्याः अक्षिलौल्याभ्यामार्थम् । समुपगतं मृगं धरन्तं हस्तेनेति शेषः ॥

द्राग्दातुं प्रतिवचनोदयापराङ्ग-
प्रस्फालप्रकटितपारितोपिकाणि ।
कान्ताङ्कोपरि परिरम्भणोद्यदुद्य-
द्रोमाञ्चाङ्कुरमपरं प्रसारयन्तम् ॥ २७ ॥

द्रागिति । प्रतिवचनोदयापराङ्गप्रस्फालप्रकटितपारितोपिकाणि प्रतिवचनोदयः प्रत्युत्तरोक्तिः तस्याः अपराङ्गे पश्चाद्भागे प्रस्फालाः आस्फालनान्येव प्रकटितपारितोपिकाणि परितोषेण दीयमानानि तानि । द्राक् शीघ्रम् । दातुम् । कान्ताङ्कोपरि कान्तायाः पार्वत्याः अङ्कोपरि उत्सङ्गस्योपरि । परिरम्भणोद्यदुद्यद्रोमाञ्चाङ्कुरं परिरम्भणेन आलिङ्गनेन उद्यदुद्यन्तः पुनः पुनरुत्पन्नाः रोमाञ्चाङ्कुरा यस्य स तथोक्तः तम् । अपरं हस्तं प्रसारयन्तम् । प्रतिवचनोदयेत्यत्र कारणालंकारः । दातुमित्यत्र असिद्धफलोत्प्रेक्षा ॥ २७ ॥

आत्मीयार्जुनरुचिशैलजाशितिश्री-
कौमारारुणरुचिनिश्चितत्रिवेण्याम् ।
भक्ताक्ष्णोः स्नपनभरैः सदा ददानं
काम्यार्थाननुचरनान्दिकेशवन्द्यम् ॥ २८ ॥

**आत्मीयेति** । आत्मीया स्वकीया अर्जुनरुचिः सितकान्तिः सैव गङ्गा शैलजायाः पार्वत्याः शितिश्रीः नीलकान्तिः सैव यमुना कौमारारुणरुचिः कुमारसंबन्धिनी अरुणरुचिः सैव सरस्वती एवं तिसृभिः नदीभिः निश्रितायां त्रिवेण्यां तिस्रो वेणयो नद्यः यस्यां सा तथोक्ता तस्याम्। 'वेणीर्नदीप्रवाहः' इति विश्वः । भक्ताक्ष्णोः भक्तनयनयोः । स्नपनभरैः स्नानविधानातिशयैः । काम्यार्थान् अभीष्टार्थान् । सदा । ददानं प्रयच्छन्तम् । प्रयागस्नानम् हि काम्यार्थप्रदमिति सितासितेत्यादिश्रुतिसिद्धम् । अनुचरनन्दिकेशवन्द्यम् अनुचरेण सेवकेन नन्दिकेशेन वन्द्यम् । प्रशंसितव्यम् एतादृशं परशिवं नुनावेति पूर्वेणान्वयः ॥ २८ ॥

स्तुतिप्रकारमेव दर्शयति—

**क्षीराब्धिं ददुपमन्यवे नमस्ते**
**मृत्युघ्नस्त्वमृषितनूभुवो नमस्ते ।**
**विश्वेश त्रिपुरविभेदिने नमस्ते**
**कामारे खलमखहारिणे नमस्ते ॥ २९ ॥**

**क्षीराब्धिमिति** । उपमन्यवे क्षीरमात्रार्थिने क्षीराब्धिं क्षीरसमुद्रमेव ददत् । हे विश्वेश, ते तुभ्यं नमः । त्वं ऋषितनूभुवः ऋषिपुत्रस्य मार्कण्डेयस्य मृत्युघ्नः मृत्युहन्ता असीति शेषः । ते तुभ्यं नमः । त्रिपुरविभेदिने त्रिपुरं विभिनत्ति तच्छीलस्त्रिपुरविभेदी तस्मै ते नमः । कामारे कामशत्रो खलमखहारिणे दक्षाध्वरहारिणे ते तुभ्य नमः ॥ २९ ॥

स्तुत्याम्भोरुहभुव ईश्वरः प्रसन्नो
प्रोचे तं किमिह समागतोऽसि वत्स ।
ब्रूहीष्टं सपदि समस्तमातनोमी-
त्युक्तोऽयं प्रतिवचनं मुदा जगाद ॥ ३० ॥

स्तुत्येति । अम्भोरुहभुवः ब्रह्मणः । स्तुत्या स्तोत्रेण । प्रसन्नः ईश्वरः तं ब्रह्माणम् । प्रोचे उवाच । हे वत्स, ब्रह्मन् । इह अत्र । किं किमर्थम् । आगतोऽसि । इष्टं अभीष्टम् । ब्रूहि । सपदि सांप्रतम् समस्तम् । आतनोमि करोमि । इत्युक्तः । अयं ब्रह्मा । प्रतिवचनं प्रतिवाक्यम् । मुदा सन्तोषेण । जगाद उवाच ॥ ३० ॥

इत्येवं विनयगिरार्थितो गिरीशः
भूमौ श्रीशिवगुरुभूमिदेवसूनुः ।
इष्टार्थांस्तव रचयिष्यते मदंशो
ब्रह्मन्नित्युरुकरुणानिधिस्तमूचे ॥ ३१ ॥

इतिति । इत्येवं पूर्वोक्तप्रकारेण विनयगिरा विनयवाक्येन । अर्थितः प्रार्थितः । उरुकरुणानिधिः बहुदयानिधिः । गिरीशः शिवः । हे ब्रह्मन्, भूमौ मदंशः ममांशो यस्मिन् सः । श्रीशिवगुरुभूमिदेवसूनुः । श्रीयुक्तस्य शिवगुरुनाम्नो भूमिदेवस्य ब्राह्मणस्य सूनुः पुत्रः । तव ते । इष्टार्थान् । रचयिष्यते करिष्यते । इति । तं ब्रह्माणं । ऊचे जगाद ॥ ३१ ॥

नारदोक्तभूलोकबहुमतावस्थानश्रवणसन्ततविधिप्रार्थितपरशिवसान्त्वनादिसर्वमुक्त्वा शिवगुरुनिवासदेशादि वर्णयति—

**स्वर्णाद्रेः ककुभि विभाति दक्षिणस्यां**
**देशः कोऽप्यथ भुवि केरळाभिधानः ।**
**पूर्णश्रीर्जितदिविषत्पुरैः पुराग्र्यै**
**र्विप्रौघैः श्रुतिविदितोरुसच्चरित्रैः ॥ ३२ ॥**

**स्वर्णाद्रेरिति** । अथ । ब्रह्मसान्त्वपनानन्तरं । स्वर्णाद्रेः । मेरुपर्वतात् । दक्षिणस्यां ककुभि दिशि । जितदिविषत्पुरैः जितं दिविषत्पुरं देवनगरं यैस्तानि तथोक्तानि तैः । पुराग्र्यैः । पुरःश्रेष्ठैः । श्रुतिविदितोरुसच्चरित्रैः श्रुतिविदितानि श्रुतिप्रसिद्धानि उरूणि सन्ति चरित्राणि येषां ते तथोक्ताः तैः । विप्रौघैः ब्राह्मणसमूहैः । पूर्णश्रीः पूर्णाः संपूर्णाः श्रियो यस्मिन् स तथोक्तः । केरल इत्यभिधानं नाम यस्य तथोक्तः । कोऽपि देशः । विभाति ॥ ३२ ॥

**यस्याख्यामवगमयन्ति निश्चितार्था**
**संपूर्णाः सुरुचिरकेरभूरुहौघाः ।**
**तत्रत्या हृदि सरसा बहिः सुरूपा**
**लोका इत्यवगमयत्फलालिभाराः ॥ ३३ ॥**

**यस्येति** । तत्रत्याः । लोकाः जनाः । हृदि अन्तः सरसाः बहिः सु-

रूपाः शोभनरूपवन्तः सुन्दराश्च । इत्येवमर्थं अवगमयत्फलालिभाराः अवगमयन्तः बोधयन्तः फलालिभाराः येषां ते तथोक्ताः । सुरुचिरकेरभूरुहौघाः सुरुचिराः केरभूरुहौघाः नारिकेलवृक्षसमूहाः । संपूर्णाः व्याप्ताः सन्तः । यस्य देशस्य । आख्यां केरल इत्याख्याम् । निश्चितार्थां केरान् नारिकेरान् लाति आदत्त इति निश्चितोऽर्थो यस्यास्ताम् । अवगमयन्ति बोधयन्ति । **निरुक्त्यलंकारः** । अवगमयदित्यत्र **फलोत्प्रेक्षा** ॥ ३३ ॥

**देशेन स्वरपि समं न सर्वदेति**
**व्यालोलाः क्रमुकमहीरुहा महोच्चाः ।**
**यत्रैलाव्रततिवधूपगुह्यमाना**
**भद्रश्रीधरणिरुहोऽन्विताभिधानाः ॥ ३४ ॥**

**देशेनेति** । यत्र देशे स्वरपि स्वर्गोऽपि । देशेन एतद्देशेन । सर्वदा । समं समानम् । न भवतीति । व्यालोलाः निषेधानुकरणतिर्यक्शिरःकम्पनवन्तः । महोच्चाः । क्रमुकमहीरुहाः पूगवृक्षाः सन्तीति शेषः । **उत्प्रेक्षालंकारः** । किंच भद्रश्रीधरणिरुहः श्रीगन्धवृक्षाः । 'भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः । एलाव्रततिवधूपगुह्यमानाः एलाव्रततयः एलालताः । 'वल्ली तु व्रततिर्लता' इत्यमरः । ता एव वध्वः ताभिरुपगुह्यमानाः आलिङ्ग्यमानाः सन्तः । अन्विताभिधानाः भद्राश्रीर्येषामिति अन्वितं अभिधानं येषामिति तथोक्ता भवन्तीति शेषः । **निरुक्त्यलंकारः** ॥

माकन्दा दृढपरिरब्धनागवल्ल्यो
माङ्गल्यं भुवि बहुलं विभासयन्ति ।
यत्रैवं पनसमुखाधि कद्रुमाल्यः
सन्तापी रविरपि नेति बोधयन्ति ॥ ३५ ॥

**माकन्दा इति** । यत्र देशे। दृढपरिरब्धनागवल्ल्यः दृढं गाढं परिरब्धाः नागवल्ल्यः ताम्बूलीलताः यैस्ते तथोक्ताः। माकन्दाः रसालवृक्षाः। भुवि बहुलं माङ्गल्यम्। विभासयन्ति द्योतयन्ति। पनसमुखाः अधि कद्रुमाल्यः पनसमुखानामधि कद्रुमाणामावल्यः श्रेणयः। रविरपि सन्तापी न भवतीति बोधयन्ति। वृक्षाणां निबिडत्वात् आतपप्रसारस्याप्यभाव इति भावः ॥ ३५ ॥

यत्रत्या ननु बहु धान्यमाश्रयन्तो-
ऽप्याश्चर्यं न हि बहुधान्यमाश्रयन्ति।
मन्वाद्या यदवनिपान् स्ववाक्यपालान्
मन्वाना इह शुभमास्त्विवतीरयन्ति ॥ ३६ ॥

**यत्रेति**। यत्रत्याः यस्मिन् देशे स्थिताः जनाः । अव्ययात्त्यपिति त्यप्। बहु बहुळम्। धान्यम् आश्रयन्तोऽपि बहुधा अन्यं जनं नाश्रयन्ति। हि। ननु आश्चर्ये। **विरोधाभासोऽलंकारः**। मन्वाद्याः मनुबृहस्पतिदक्षादयः स्मृतिकर्तारः। यदवनिपान् यद्देशक्षितिपान्। स्ववाक्यपालान् स्ववाक्यानि स्मृतीः अथानुष्ठानरूपेण पालयन्तीति तथोक्ताः

तादृशान् । मन्वानाः सन्तः । इह अस्मिन् देशे । शुभं मङ्गलम् । अस्त्विति ईरयन्ति कथयन्ति ॥ ३६ ॥

देशेऽस्मिन् विलसति कारटीति नाम्ना
ग्रामः कोऽप्यवनिसुरैर्विभासमानः ।
स्वाचारैरनवरतं विधीयमानैः
सर्वेषां गुरुभिरिव प्रकाशमानैः ॥ ३७ ॥

देश इति । अस्मिन् देशे केरलदेशे । अनवरतं सर्वदा । विधीयमानैः अनुष्ठीयमानैः । स्वाचारैः सुष्ठु शोभनतमैः आचारैः । अन्येषां जनानां गुरुभिरिव प्रकाशमानैः । अवनिसुरैः ब्राह्मणैः । विभासमानः कारटीति नाम्ना कोऽपि ग्रामो विलसति ॥ ३७ ॥

आलोच्य स्वयमपि दैवतैःसमस्तै-
रेतादृक् बहुसुकृतस्थले निवासम् ।
वाञ्छद्भिश्चिरमिव कारितैरगारै-
र्विभ्राजं वरतटिनीतटे विभाति ॥ ३८ ॥

आलोच्येति । एतादृक् बहुसुकृतस्थले एतादृशि बहूनि सुकृतानि यस्मिन् तथा भूते स्थले । विभ्राजं दीप्यमानम् । निवासं वाञ्छद्भिः स्वयमालोच्य समस्तैर्दैवतैः चिरमालोच्य स्वयं कारितैरिव अगारैः । स इति शेषः । विभाति शोभते ॥ ३८ ॥

तत्र श्रीशिवगुरुनामकोऽग्रजन्मा
प्राग्विद्यापदमधिराजनाम धर्तुः ।

संख्यावन्मकुटमणेर्विशालकीर्ते-
रम्भोधेरिव सितरोचिरात्मजोऽभूत् ॥ ३९ ॥

**तत्रेति**। तत्र। संख्यावन्मकुटमणेः संख्यावन्तः विद्वांसः। 'संख्यावान् पण्डितः कविः' इत्यमरः। तेषां मकुटमणेः किरीटरत्नस्य। विशालकीर्तेः विशाला कीर्तिः यस्य स तथोक्तः तस्य। प्राग्विद्यापदं प्राक् विद्यापदं यस्य तत् प्राग्विद्यापदं तथाभूतम् अधिराजनाम विद्याधिराज इति प्रथितं नाम आख्याम्। धर्तुः तस्य शिवगुरुनामकः शिवगुरुरिति नाम यस्य सः शिवगुरुनामकः। 'दोषाद्विभाषेति बहुव्रीहौकप्रत्ययः'। अग्रजन्मा ब्राह्मणः। आत्मजः पुत्रः। अम्भोधेः समुद्रस्य। सितरोचिचन्द्र इव। अभूत्। **उपमालंकारः** ॥ ३९ ॥

विद्याष्टादशककृती सुकर्मनिष्ठो
वासिष्ठोऽयमिति नुतो गुणैर्गरिष्ठः।
नित्यं यः क्रतुषु हविर्विशेषदानैः
पीयूषस्मृतिरहितान् सुरान् वितेने ॥ ४० ॥

**विद्येति**। यः। क्रतुषु। हविर्विशेषदानैः। सुरान् देवान्। पीयूषस्मृतिरहितान् नित्यं गृह्यमाण अमृतस्मरणरहितान्। वितेने चक्रे। सः विद्यानां अष्टादशकं तस्मिन् कृती कुशलः। सुकर्मनिष्ठः सत्कर्मनिष्ठः। गुणैः दयादाक्षिण्यादिभिः। गरिष्ठः। सः शिवगुरुदीक्षितः। अभूत्॥

यं शिष्या गिरममृतं सदा ददानाः
लोकेभ्यः सलिलमुचां तुलां दधानाः।

संपूर्णां स्थिरगुरुदक्षिणां प्रशंसां
अम्भोनिध्युपमितिमापयांबभूवुः ॥ ४१ ॥

यमिति। यं शिवगुरुयज्वानं। लोकेभ्यः । गिरं वाग्रूपममृतम्। सदा ददानाः प्रयच्छन्तः। सलिलमुचां मेघानाम्। तुलां सादृश्यम्। दधानाः सन्तः । अमृतशब्दश्लेषेण तत्सादृश्यं बोध्यम्। संपूर्णं स्थिरगुरुदक्षिणां स्थिरा च सा गुरुदक्षिणा च ताम्। अम्भोनिध्युपमितिं अम्भोनिधेः समुद्रस्य उपमिति उपमानरूपाम् । प्रशंसां स्तुतिम् । आपयांबभूवुः प्रापयामासुः । समुद्राज्जलं गृहीत्वा मेघाः लोकेभ्यो वर्षन्ति तद्वदेतेऽपि गुरोः सकाशात् विद्यामादाय लोकेभ्यः प्रयच्छन्ति । अतः तेषां मेघसादृश्यम् ॥ ४१ ॥

मुक्तोऽयं व्रतकरणादृणादृषीणां
देवानामपि विहितैः समग्रयज्ञैः ।
निर्मुक्तो न चिरमभूदृणात्पितॄणां
सा चिन्ता मनसि सदास्य संनिविष्टा ॥४२॥

मुक्त इति। अयं शिवगुरुयज्वा । व्रतकरणात् ब्रह्मचर्यव्रताचरणात्। ऋषीणां कृष्णद्वैपायनादीनाम्। ऋणात्। विहितैः कृतैः। समग्रयज्ञैः समस्तयागैः । देवानामपि ऋणात् मुक्तः विमोचितः । पितॄणां ऋणात् चिरं न निर्मुक्तोऽभूत्। सन्तत्यभावादिति भावः। 'त्रिभिर्ऋणवान् जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः' इति श्रुतेः। सा चिन्ता हृदयं अपुत्रो भवामीति [illegible] अस्य मनसि सदा संनिविष्टा अभूदिति शेषः ॥ ४२ ॥

नापुत्रो व्रजति गतिं सतामितीदं
संचिन्त्यानवरतचिन्तनैकलोलः ।
कुर्वाणो भजनमनेकदेवतानां
नैरर्थ्यात्प्रियतमयाकरोद्विचारम् ॥ ४३ ॥

**नेति** । अपुत्रः सतां गतिं न व्रजति। 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः। इति संचिन्त्य अनवरतचिन्तनैकलोलः पुत्राभावचिन्तया एकया लोलः स इति शेषः । अनेकदेवतानां भजनं कुर्वाणः सन् नैरर्थ्यात् प्रयोजनाभावात् । प्रियतमया पत्न्या सह । विचारमकरोत् आलोचितवान् इत्यर्थः ॥ ४३ ॥

प्राज्ञा सा द्विजगुरुदेवतासु भक्ता
प्रावोचत् परमथ मे विभाति नाथ ।
लोकानामभिलषितं यदस्त्यसाध्यं
तत्सर्वं शिवदययैव साधनीयम् ॥ ४४ ॥

**प्राज्ञेति** । सा शिवगुरुयज्वनः प्रियतमा। द्विजगुरुदेवतासु भक्ता सती नाथं प्रत्यवोचत् । अथ अनन्तरम् । हे नाथ मे परं विभाति । सर्वेषामसाध्यं यदभिलषितं तत्सर्वं शिवदययैव साधनीयम् ॥ ४४ ॥

सर्वान् तान् जातमनोरथान् विवृणोति—

क्षीराब्धिं समलभतोपमन्युरीशात्
द्राग्मृत्युं निरगमयन्मृकण्डुसूनुः ।

पार्थश्च प्रबलमवाप्तवान् वरास्त्रं
यक्षेशोऽभवदुरुवैभवः सखा च ॥ ४५ ॥

क्षीराब्धिमिति। उपमन्युः ऋषिपुत्रः। ईशात् शिवात् क्षीराब्धि क्षीरसमुद्रम् अलभत प्रापत्। मृकण्डोः सूनुः पुत्रः मार्कण्डेयः। द्राक् शीघ्रम्। मृत्युम्। निरगमयत् निर्गमं कारितवान्। पार्थः अर्जुनश्च। प्रबलं प्रकृष्टबलम्। वरास्त्रं पाशुपताख्यम्। अवाप्तवान्। यक्षेशः कुबेरोऽपि। उरुवैभवः ऊरु महत् वैभवं यस्य स तथोक्तः। सखा च अभवत् ॥ ४५ ॥

प्रागेवं मुररिपुबाणरावणाद्याः
स्वस्वेष्टान्युरुतपसा जवादवापुः।
आवामप्यथ वरदं दयापयोऽब्धिं
सर्वेशं तनयवराप्तये भजावः ॥ ४६ ॥

प्रागिति। प्राक् पूर्वम्। एवम् उक्तप्रकारेण। मुररिपुबाणरावणाद्याः मुररिपुः विष्णुः बाणो बाणासुरः रावणः आद्याः येषां ते तथोक्ताः आद्यशब्देन वासुक्यादय उच्यन्ते। उरुतपसा। जवात् क्षिप्रम्। स्वस्वेष्टानि स्वाभिलषितानि। अवापुः प्राप्तवन्तः। अथ अनन्तरम्। आवामपि दम्पती वरदं दयापयोऽब्धिम्। सर्वेशं शिवम्। तनयवराप्तये तनयरूपवरस्य आप्तये प्राप्तये। भजावः सेवावहे ॥ ४६ ॥

इत्युक्तिं हृदि कृतवान् दृढप्रतिज्ञः
प्रौढोऽसौ सह च तया तपांसि तेपे।

तद्ध्यानं चिरमकरोत्तदङ्घ्रिपूजां
तन्मन्त्रप्रचुरजपं कथां तदीयाम् ॥ ४७ ॥

इतीति । प्रौढः । दृढप्रतिज्ञः दृढा प्रतिज्ञा यस्य स तथोक्तः । असौ शिवगुरुयज्वा । इति इत्थंभूताम् उक्तिं । वाक्यम्। हृदि मनसि। कृतवान् । सन् । तद्ध्यानं तस्य शिवस्य ध्यानम् । तदङ्घ्रिपूजां शिवपदार्चनम् तन्मन्त्रप्रचुरजपं तन्मन्त्राणां शिवपञ्चाक्षर्यादीनां प्रचुरं बहुलं जपम् । तदीयां शिवसंबन्धिनीम् । कथां प्रशंसाप्रबन्धाम् । चिरं बहुकालम् । अकरोत् ॥ ४७ ॥

शार्दूलाजिनविमलासनोपविष्टः
कर्पूरोत्करविहसद्विभूतिधारी ।
रुद्राक्षान्विधिविहितान् तनौ दधानः
संख्यावान् कलयति शंकरैकभावम् ॥ ४८ ॥

शार्दूलेति । शार्दूलाजिनविमलासनोपविष्टः शार्दूलाजिनं व्याघ्रचर्मैव विमलासनं तत्रोपविष्टः । कर्पूरोत्करविवसद्विभूतिधारी कर्पूरोत्करं कर्पूरराशिं विहसन्ती या विभूतिः तां धरतीति तथोक्तः । विधिविहितान् 'रुद्राक्षान् कण्ठदेशे दशनपरिमितान्' इत्यादिविधिषु विहितान् । रुद्राक्षान् । तनौ शरीरे । दधानः । संख्यावान् पण्डितः। असाविति शेषः । शिवगुरुयज्वा शंकरैकभावं शंकरे एकभावं एकतात्पर्यम् । कलयति अङ्गीकरोति । देवो भूत्वा देवमर्चयेदिति वैदिकसिद्धान्ताभिमतः । अभेदोऽपि ध्यायमानः सूच्यते ॥ ४८ ॥

राजच्छ्रीवृषभगिरौ विशुद्धचेताः
आसन्ने वरतटिनीतटे मनोज्ञे ।
मूलाशी कतिपयवासरान्फलाशी
पर्णाशी बहुनियमान् समञ्चति स्म ॥ ४९ ॥

राजदिति । राजच्छ्रीवृषभगिरौ राजंश्चासौ वृषभगिरिश्च तस्मिन् । मनोज्ञे मनोहरे । आसन्ने समीपस्थे । वरतटिनीतटे उत्तमनदीतीरे । विशुद्धचेताः विशेषाच्छुद्धमनाः । स इति शेषः । कतिचन वासरान् कतिचिदहानि । 'कालाध्वनोऽत्यन्तसंयोगः' इति द्वितीया । मूलाशी मूलानि कन्दानि अश्नातीति तच्छीलः । कतिपयवासरान् । पर्णाशी पर्णाशनशीलः । तथा फलाशी फलाशनशीलः । ईदृशान् बहुनियमान् बहुप्रकारान् नियमान् । समञ्चति स्म संगतोऽभूत् । अकार्षीदिति भावः ॥ ४९ ॥

एवं तत्कृततपसा प्रसन्न ईशः
स्वप्ने तं रुचिरतरामुवाच वाचम् ।
वत्स त्वं मनसि समीप्सितं वदेति
प्रीतोऽसौ शिवगुरुरात्मजं ययाचे ॥ ५० ॥

एवमिति । एवम् उक्तप्रकारेण । तत्कृतेन तपसा । प्रसन्नः । ईशः स्वप्ने । तं शिवगुरुयज्वानं प्रति । हे वत्स । त्वं मनसि समीप्सितम् । वद कथय । इति रुचिरतराम् । वाचम् । उवाच अकथितं चेति द्विकर्मकत्वम् । प्रीतः असौ शिवगुरुः । आत्मजं पुत्रम् । ययाचे देहीति बभाषे ॥ ५० ॥

पुत्रांस्ते बहुवयसो बहून् किमज्ञान्
एकं वा लघुवयसं ददामि सूनुम् ।
सर्वज्ञं तमिति शिवेन पृच्छ्यमान-
स्त्वस्त्वेकः सकलविदित्युवाच विप्रः ॥५१॥

पुत्रानिति । ते तुभ्यम् । बहुवयसः बहुवर्षजीविनः । बहून् । अज्ञान् मन्दबुद्धीन् पुत्रान् ददामि किम् । लघुवयसम् अल्पवर्षम् । सर्वज्ञम् । एकम् । तं सूनुं पुत्रम् । ददामि वा । इति शिवेन पृच्छ्यमानः । विप्रः शिवगुरुयज्वा । सकलवित् । एकः । अस्तु । इत्युवाच ॥ ५१ ॥

शीघ्रं ते भवतु तथा गृहं व्रजेति
प्रीतेशप्रतिवचनान्मुदा बुबोध ।
स्वप्नं तं सपदि वधूं वदन् गृहं स्वं
संतुष्टो युवतियुतः समाजगाम ॥ ५२ ॥

शीघ्रमिति । ते तव । तथा सर्वज्ञपुत्रः शीघ्रं भवतु । स्वगृहं व्रज याहि । इति प्रीतस्य ईशस्य प्रतिवचनात् प्रत्युत्तरभाषणात् । मुदा हर्षेण । बुबोध । स इति शेषः । सपदि शीघ्रम् । तं स्वप्नम् । वधूं प्रति वदन् । युवतियुतः । संतुष्टः सन् । स्वं गृहम् । समाजगाम ॥

साफल्यं कृततपसो विधातुकामः
सद्विप्रान् बहुरुचि भोजयांचकार ।

सद्भक्त्या तदशितशेषभोक्तृभर्तुः
शिष्टं सान्वशितवती दधार गर्भम् ॥ ५३ ॥

साफल्यमिति । स शिवगुरुयज्वा । कृततपसः कृततपश्चर्यायाः । साफल्यं सार्थक्यम् । विधातुकामः सन् । 'तुंकाममनसोरपि' इति मलोपः । सद्विप्रान् उत्तमब्राह्मणान् । बहुरुचि बह्व्यः रुचयो भोज्यविषयकप्रीतयो यस्मिन् कर्मणि तत्तथा । भोजयांचकार भोजनं कारयामास । सापि शिवगुरुयज्वपत्नी । सद्भक्त्या । तदशितशेषभोक्तृभर्तुः तैः ब्राह्मणैः अशितस्य भुक्तस्य यः शेषः तस्य भोक्ता स चासौ भर्ता चेति तस्य । शिष्टम् । अनु पश्चात् । अशितवती भुक्तवती सती । गर्भम् । दधार ॥

सार्थास्यां व्यजयत गुर्विणीति वाणी
वर्धिष्णुर्भुवनगुरुर्यतो विवेश ।
अङ्गानामथ कृशतां विलोक्य लोकः
क्षीणत्वं भुवि बुबुधे परेषु भावि ॥ ५४ ॥

सार्थेति । अस्यां शिवगुरुयज्वपत्न्याम् । गुर्विणीति गर्भिणीति गुरुरस्यामस्तीति गुर्विणीति । वाणी । सार्था अन्वर्था । व्यजयत विजयते स्म । यतः यस्मात्कारणात् । वर्धिष्णुः उदरान्तर्वर्धमानः । भुवनगुरुः लोकगुरुः । विवेश प्रविष्टः । निरुक्त्यलंकारः । अथ अनन्तरम् । अस्यामङ्गानाम् अवयवानाम् । कृशतां कार्श्यम् । विलोक्य । लोकः

जनः । भुवि भूमौ । परेषु विमतेषु । भावि भविष्यत् । क्षीणत्वं क्षीणभावम् । बुबुधे जज्ञौ ॥ ५४ ॥

सा नारी सितभसितादिनी यतोऽभू-
दुद्धर्ता तदभिमतं मतं तनूजः ।
किं चास्यास्तनुरपि तन्निभावदाता
कैलासद्युतिविलसच्छिवांशयुग्वा ॥ ५५ ॥

**सेति** । यस्मात्कारणात् । सा नारी शिवगुरुयज्वपत्नी । सितभसितादिनी सितं यद्भसितं भस्म तदत्ति भक्षयतीति तच्छीला । अभूत् । तस्मात्कारणात् । स तनूजः पुत्रः तदभिमतं विभूत्यभिमतम् । मतं विशुद्धवैदिकाद्वैतमतम् । उद्धर्ता उद्धरिष्यते । उत्पूर्वात् धृञो लुट् । किं च अस्याः शिवगुरुयज्वपत्न्याः । तनुरपि शरीरमपि । तन्निभावदाता विभूत्युपमानधवला । अभूत् । कैलासद्युतिविलसच्छिवांशयुग्वा कैलासस्य द्युत्या धवलया विलसन् यः शिवः तस्य अंशयुग्वा । अभूत् । ननु विशुद्धवैदिकाद्वैतमतस्य विभूत्यभिमतत्वं न संभवति, विभूतेः शिवचिह्नत्वेन तदुत्कर्षप्रतिपादकत्वाभावात् । न च शांकरभाष्ये सर्वेषु सगुणाधिकरणेषु 'सगुणः परमेश्वर इहोपास्यते' इति मुहुर्व्यवहारदर्शनात् परमेश्वरशब्दस्य शिवैकप्रतिपादकत्वात् व्यवहारदशायां तदुत्कर्ष एव आचार्याणामभिमत इति वाच्यम् । विष्णुपराणां भगवद्गीताविष्णुसहस्रनामादीनामेव व्याख्यानकरणेन विष्णुरामनरसिंहादिस्तोत्रेषु तदुत्कर्षस्यैव प्रतिपादितत्वेन परमेश्वरपदस्य योगरीत्या त-

त्परस्य उन्नेतुं शक्यत्वादिति चेत्, उच्यते—व्यवहारदशायाम् आचार्याणां विष्णोरुत्कर्षो नाभिमतः, अपि तु शिवस्यैव। तथाहि अद्वैतग्रन्थेष्वपि तदेकोऽवशिष्टः शिवः केवलोऽहम्, शिवोऽहं शिवोऽहं शिवोऽहमिति मुहुर्व्यवहारेण शिवमूर्तेरेव प्राथमिकत्वप्रकटनात् शिवविष्णुभुजङ्गयोः निराकारं चिदंशमिति निर्देशपरिभेदेन शिवोत्कर्षतात्पर्यस्य गम्यमानत्वात्। अत एव शिवचिह्नविभूतिरुद्राक्षधारणं स्वयमप्यकार्षुः। सर्वं चेदं कामिकाद्यागमसंमत्या उक्तम्। तथा च तत्रैव 'मच्चिह्नधारिणो लोके देशिकात्परमात्मनः। मदेकशरणास्तेषु योग्यं नैवान्यजन्तुषु॥' इत्यादि। वस्तुतस्तु विभूतिधारणं सर्वदेवताभक्तसाधारणम्। तथा च पुलस्त्यः— 'अग्निरित्यादिभिर्मन्त्रैः शुद्धं भस्माभिमन्त्रितम्। शिवमन्त्रेण वा धार्यं मन्त्रेणाष्टाक्षरेण वा॥ करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः। त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते॥ अष्टाक्षरेण मन्त्रेण यः करोति त्रिपुण्ड्रकम्। विष्णोः पदमवाप्नोति नान्यथा स्मृतिचोदितम्॥' 'सौरं पदमवाप्नोति गायत्र्या मुनिसत्तम। प्राप्नोति ब्रह्मणो रूपं प्रणवेन न संशयः॥' तथैव भविष्यत्पुराणेऽपि 'सत्यं शौचं जपो होमः तीर्थं देवादिपूजनम्। तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत्॥' इति। अन्यत्रापि—'न तद्ध्यानं न तज्ज्ञानं न तद्दानं जपो न सः। त्रिपुण्ड्रेण विना येन विप्रेण यदनुष्ठितम्॥' इति। अत्र बहु वक्तव्यमपि ग्रन्थविस्तरभयान्नेह प्रपञ्च्यते॥ ५५॥

वैरस्यं मलयजभूषणादि धर्तुं
सा चक्रे यदिह जनिष्यते विरागी।

मध्योऽस्या गगननिभो महत्त्वमापत्
भङ्क्ताबोध्ययमिति शून्यवादिशास्त्रम् ॥ ५६ ॥

**वैरस्यमिति**। सा शिवगुरुयज्वपत्नी। मलयजभूषणादि श्रीगन्धान् आभरणानि च। धर्तुम्। वैरस्यं विरसतां रागाभावम् 'गुणे रागे द्रवे रसः' इत्यमरः। चक्रे कृतवती। यद्यस्मात् कारणात्। इह अस्याम्। विरागी वैराग्यवान्। जनिष्यते उत्पत्स्यते। अस्याः। गगननिभः। मध्यः। महत्त्वम्। आपत् प्राप्तवान्। अयं शिशुः। शून्यवादिशास्त्रं जगतः शून्यत्वं कथयतां परेषां शास्त्रम्। भङ्क्ता भङ्क्ष्यति। इत्यत्राबोधि ज्ञातः लोकैरिति शेषः। बुध्यतेः कर्मणि लुङ्। **फलोत्प्रेक्षा** ॥ ५६ ॥

नीलं तत्सपदि भविष्यति क्षमायां
दुष्टानां वदनमितीव बोधनाय।
वक्षोजाग्रयुगलनैल्यमाविरासीत्
गुर्विण्याः शिवगुरुभूसुराग्र्यपत्न्याः ॥ ५७ ॥

**नीलमिति**। सपदि शीघ्रम्। क्षमायां भूमौ। दुष्टानाम्। तत् प्रसिद्धं वदनम्। नीलं नीलवर्णम्। भविष्यतीति बोधनायेव। गुर्विण्याः गर्भिण्याः शिवगुरुभूसुराग्र्यपत्न्याः। वक्षोजाग्रयुगळनैल्यं चूचुकयुग्मनैल्यम्। आविरासीत् आविर्बभूव। **उत्प्रेक्षालंकारः** ॥

भर्ता पुंसवनमथो शुभेऽह्नि चक्रे
सीमन्तं स शिवगुरुर्मुदा विधिज्ञः।

गर्भः सोऽप्यथ ववृधे तदीयचेतो-
हर्षेण प्रतिदिवसं सरोरुहाक्ष्याः ॥ ५८ ॥

**भर्तेति** । अथ अनन्तरम् । विधिज्ञः विधीन् श्रौतस्मार्तविधीन् जानातीति विधिज्ञः । भर्ता पतिः । सः शिवगुरुः । मुदा संतोषेण । शुभेऽह्नि शुभदिवसे । पुंसवनं पुंसवनाख्यं कर्म । सीमन्तं सीमन्तकर्म च । चक्रे कृतवान् । सरोरुहाक्ष्याः । शिवगुरुयज्वपत्न्याः । स गर्भोऽपि । प्रतिदिवसं दिने दिने । तदीयचेतोहर्षेण सह तस्याः संबन्धिना चेतोहर्षेण सह मनःसंतोषेण सह । अभिववृधे अभिवृद्धो बभूव ॥

साध्वी सा किल नवमेऽथ मासि पूर्णे
सल्लग्नेऽधिपशशिसंश्रिते कुलीरे ।
केन्द्रोच्चैर्गुरुशनिभूमिसूनुसूर्यैः
प्रासोष्टामितमहसं सुखेन सूनुम् ॥ ५९ ॥

**साध्वीति** । अथ अनन्तरम् । साध्वी पतिव्रता 'सती साध्वी पतिव्रता' इत्यमरः । सा शिवगुरुयज्वभार्या । नवमे मासि पूर्णे सति । अधिपशशिसंश्रिते अधिपतिना शशिना चन्द्रेण संश्रिते आश्रिते । कुलीरे कर्कटके । सल्लग्ने प्रशस्तलग्ने । केन्द्रेषु लग्नचतुर्थसप्तमदशमेषु कर्कटकतुलामकरमेषेषु । गुरुशनिभूमिसूनुसूर्यैः उपलक्षिते । अमितमहसं अपरिमितकान्तिमन्तम् । सूनुं कुमारम् । प्रासोष्ट किल प्रसूतवती किल । लग्नचन्द्रफलं शमाधिक्यम्, गुरोः फलं तु विद्यातिशयः । चतुर्थशनिना विषयसुखाद्यभावः । मकरकुजेन वादशौर्यम् । मेष-

सूर्येण संन्यासयोगः । इत्यादिहोराशास्त्रादूह्यम् ॥

**स प्रादात्सुतजननोत्सवक्षणेऽस्मिन्**
**वक्तृभ्यः स्ववसनभूषणादि सर्वम् ।**
**ईदृक्षं सुतमथ लब्धवानहं मे**
**वस्त्राद्यं कियदिति तस्य धीस्तदाभूत् ॥ ६० ॥**

स इति । अस्मिन् सुतजननोत्सवक्षणे । वक्तृभ्यः । पुत्रोत्पत्तिं कथयितृभ्यः । सर्वं स्ववसनभूषणादि स्वं धनं वसनानि वस्त्राणि भूषणानि आभरणानि च एतदादि सर्वम् । प्रादात् प्रदत्तवान् । अथ अनन्तरम् । अहम् । ईदृक्षम् । सुतमेव । लब्धवान् । मे मम । वस्त्राद्यं कियत् इति । तदा तस्य धीः बुद्धिः । अभूत् ॥ ६० ॥

**मग्नोऽपि प्रमदसुधाम्बुधौ सुशास्त्रात्**
**स्नात्वासौ शुभमथ जातकर्म चक्रे ।**
**विप्रेभ्यः समदित दक्षिणां महत् किं**
**जातो यज्जयति तदात्मभूतिरेव ॥ ६१ ॥**

मग्न इति । असौ शिवगुरुयज्वा । प्रमदसुधाम्बुधौ हर्षामृतसमुद्रे । मग्नोऽपि । सुशास्त्रात् 'जाते पुत्रे पितुः स्नानं सचेलं तु विधीयते' इति धर्मशास्त्रात् स्नात्वा । अथ अनन्तरम् । शुभं जातकर्म । चक्रे । विप्रेभ्यः । दक्षिणाम् । समदित दत्तवान् । इदं किं महत् । यत् यस्मात् कारणात् । जातः बालः तदात्मनः तत्स्वरूपस्य भूतिः ऐश्वर्यमेव जयति सर्वोत्कर्षेण वर्तते । काव्यलिङ्गालंकारः ॥ ६१ ॥

कालेऽस्मिन् हरिणमृगादनादिसत्त्वाः
संचेरुः परिहृतजातिवैरभावाः ।
वृक्षाद्याः कुसुमफलान्विता अभूवन्
पेतुर्द्वैत्यभिमतपुस्तकानि हस्तात् ॥ ६२ ॥

काल इति । अस्मिन् काले पुत्रजननकाले । हरिणमृगादनादिसत्त्वाः व्याघ्रादिप्राणिनः परिहृतजातिवैरभावाः परिहृतः जातीनां वैरभावो यैस्ते तथोक्ताः सन्तः । संचेरुः । वृक्षाद्याः आद्यशब्देन लता उच्यन्ते । कुसुमफलान्विता अभूवन् । द्वैत्यभिमतपुस्तकानि हस्तात् पेतुः पतितानि । दीपकालंकारः ॥ ६२ ॥

तत्काले कृतजयघण्टिकानिनादान्
श्रुत्वा ते दिशि दिशि वादिनो व्यधावन् ।
हर्षेणाखिलनिगमान्तवाग्वधूभिः
शीर्षेऽस्य व्यरचि रयेण पुष्पवृष्टिः ॥ ६३ ॥

तदिति । तत्काले । कृतजयघण्टिकानिनादान् कृतान् जयघण्टिकानिनादान् । श्रुत्वा । ते । वादिनः । दिशि दिशि । व्यधावन् पलायांचक्रिरे । अस्य शिशोः । शीर्षे । अखिलनिगमान्तवाग्वधूभिः समस्तवेदान्तवाग्रूपाभिः वधूभिः । हर्षेण रयेण । पुष्पवृष्टिः । व्यरचि विरचिता । 'विपूर्वाद्रचप्रतियत्ने' इत्यस्माद्धातोः कर्मणि लुङ् ॥

वाले वालविवस्वतीव जनिते दैवज्ञसंमानिते
वेदव्यासहृदम्बुजं विकसितं द्वैतान्धकारोऽनशत् ।
हृष्टाः कोविदलोककोकनिकरा आलेख्यलेख्याकृति-
प्रीतस्त्रीततिसूतिकागृहमभात् पूर्णा रुचिः सन्मुखे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित
श्रीमन्नृसिंहभारतीकरकमलसंजातसकलविद्याविशारद-
पण्डितपुण्डरीकमण्डलीमार्ताण्डश्रीसच्चिदानन्द-
भारतीमुनीन्द्रनिर्मापिते विद्वद्बालक-
लक्ष्मणशास्त्रिविरचिते

**गुरुवंशे महाकाव्ये**

**प्रथमः सर्गः ।**

**बाल इति ।** दैवज्ञसंमानिते दैवज्ञैर्ज्यौतिषिकैः संमानिते पुरस्कृते । वाले बालके । वालविवस्वतीव बालसूर्य इव । जनिते सति । वेदव्यासहृदम्बुजं वेदव्यासस्य महर्षेः हृदम्बुजं हृदयाम्बुजम् । विकसितम् विकासं प्राप । स्वकृतब्रह्मसूत्रस्य भाष्यमनेन निर्मास्यत इत्याशयेनेति भावः । द्वैतान्धकारः भेदरूपं तमः अनशत् नष्टः । 'नश अदर्शन ' इत्यस्मात् ' पुषादि ' इत्यादिना अङ् । कोविदलोककोकनिकराः कोविदलोका एव विद्वज्जना एव कोकनिक-

राः चक्रवाकसमूहाः । हृष्टा अभवन् । सूतिकागृहम् । आलेख्यलेख्याकृतिप्रीतस्त्रीतति आलेख्ये चित्रे लेख्या आकृतयो यासां ताः तथोक्ताः प्रीताः स्त्रीणां ततयः समूहाः यस्मिन् तथोक्तम्। अभात् । 'भा दीप्तौ' इत्यस्माल्लङ् । सन्मुखे सतां मुखे । पूर्णा रुचिः अभात् । रूपकालंकारः शार्दूलविक्रीडितम् वृत्तम्, 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥

इति श्रीगुरुवंशव्याख्यायां भावबोधिन्यां

प्रथमः सर्गः ॥



# द्वितीयः सर्गः ॥



श्रीमान्मुदा शुभतमेऽहनि चारु नाम
चक्रे पिता सपदि शंकर इत्यमुष्य ।
अन्वर्थनाम भुवि शंकरणेन यद्वा
शं सर्वदा करवशं ध्रुवमस्य भावि ॥ १ ॥

**श्रीमानिति** । श्रीमान् पिता शिवगुरुयज्वा । सपदि । शुभतमे अहनि । मुदा हर्षेण । अमुष्य शिशोः । शंकर इति चारु नाम । चक्रे । भुवि शंकरणेन इदमन्वर्थनाम शं सुखं करोतीतिव्युत्पत्तेः । यद्वा अस्य सर्वदा शं सुखम् । करवशं हस्ताधीनम् । ध्रुवं निश्चितम् । भावि भविष्यति । इह तु शं सुखम् करे यस्य सः शंकर इति व्युत्पत्तिः । **निरुक्त्यलंकारः** । अस्मिन्सर्गे **वसन्ततिलका वृत्तम्**, 'उक्ता वसन्ततिलका तभजाजगौ गः' इति लक्षणात् ॥ १ ॥

भाषोक्तिखेलनविलोकनपूर्णहर्ष-
धात्रीजनप्रणयराशिरिवातिरागी ।
माणिक्यगुच्छ उदभादधिदोलमस्य
रम्यास्यचुम्बनसमुत्सुकलोललोलः ॥ २ ॥

**भाषोक्तीति** । अस्य शिशोः । अधिदोलं दोलायां सप्तम्यर्थेऽ-

व्ययीभावः । भाषोक्तिखेलनविलोकनपूर्णहर्षधात्रीजनप्रणयराशिरिव भाषायाम् उक्तयः भाषोक्तयः भाषोक्तय एव खेलनानि तेषां विलोकनेन पूर्णहर्षः यो धात्रीजनः तस्य प्रणयराशिरिव प्रेमपुञ्ज इव । अतिरागी अत्यन्तं शोणः । रम्यस्य शिशोरास्यचुम्बने। समुत्सुक इव लोललोलः अतिशयेन चञ्चलः । माणिक्यगुच्छः दोलाया उपरि बद्धः । उदभात् उन्नततया अशोभत । रक्तत्वं क्रोधरागयोरिति कविसमयाश्रयणात् माणिक्यगुच्छस्य धात्रीस्नेहरूपत्वेन **वस्तूत्प्रेक्षा** । गुच्छलौल्यस्य बालमुखचुम्बनौत्सुक्येनेति तु हेतूत्प्रेक्षा । प्रथमे वर्षे एव भाषाज्ञानम् अत्यद्भुतमिति महानतिशयः सूचितः ॥ २ ॥

**वर्षे द्वितीय उदितेऽकलयत्स बालः**
**सर्वा लिपीः समवलिख्य सकृन्न चित्रम् ।**
**यस्मादभूदयमथाक्षरबोधनार्थ-**
**मद्वैतरीतिमवलम्ब्य गुरुर्जनानाम् ॥ ३ ॥**

**वर्षे इति** । स बालः । द्वितीये वर्षे । उदिते । सर्वाः लिपीः । सकृत् समवलिख्य अकलयत् ज्ञातवानिति चित्रम् आश्चर्यं न । अथ अक्षरबोधनार्थम् अक्षरस्य क्षरणरहितस्य ब्रह्मस्वरूपस्य बोधनार्थं ज्ञापनाय । अक्षरशब्दस्य वर्णार्थकतया श्लेषेण प्रकृतसङ्गतिरपि बोध्या । अद्वैतरीतिम् अभेदप्रकारम् अयमेक एव पटुरित्यपि । अवलम्ब्य आश्रित्य । अयं शिशुः । जनानाम् । गुरुरभूत् । **श्लेषातिशयोक्तिकाव्यलिङ्गानां सङ्करः** ॥ ३ ॥

काव्यादिकाखिलकलाः स तृतीय एव
वर्षे बुबोध सकृदेव शिशुर्निशम्य ।
प्राप्ताः कलाश्च सकलाः स्वयमेव बाल्ये
भूमौ कलानिधिविभूषण एष यस्मात् ॥ ४ ॥

**काव्यादिका इति** । स शिशुः । तृतीय एव वर्षे । काव्यादिकाखिलकलाः काव्यादिकाः काव्यप्रभृतीः अखिलाः समग्राः चतुःषष्टिमपि कलाः कलाशास्त्राणि । सकृदेकवारमेव । निशम्य आकर्ण्य । बुबोध ज्ञातवान् । एषः । यस्मात्कारणात् । भूमौ । कलानिधिविभूषणः कलानां निधिः चन्द्रः विभूषणं यस्य सः । परमेश्वरः । अवतीर्ण इति शेषः । तस्मात् बाल्ये सकलाश्च कलाः स्वयमेव प्राप्ताः । कलानिधिविभूषणत्वात् कलाप्राप्तेः सौलभ्यमिति भावः । साक्षादीश्वरांशत्वात् मेधाधिक्यं वर्णितम् ॥ ४ ॥

चूडाकृतिं व्यतनुत द्विजराजचूडा-
रत्नस्य च स्वयमथो विधिवद्विधिज्ञः ।
वैधेन तेज उदयेन विशेषभास्वान्
उत्तेजितो मणिरिवैष तदा विरेजे ॥ ५ ॥

**चूडाकृतिमिति** । अथो अनन्तरम् । विधिज्ञः सः शिवगुरुयज्वा । द्विजराजचूडारत्नस्य द्विजानां राजा द्विजराजः 'सोमोऽस्माकं ब्राह्मणानां राजा' इति श्रुतेः । चन्द्रः चूडारत्नं किरीटरत्नं यस्य सः इत्येकोऽर्थः । द्विजाः ब्राह्मणाः तेषां राजा द्विजराजः स च तच्चूडारत्नं

चेत्यपरोऽर्थः । तस्यास्य चूडाकृतिं चूडाकर्म । विधिवत् यथाशास्त्रम् । व्यतनुत अकरोत् । विपूर्वात्तनोतेर्लङात्मनेपदम् । तदा तत्काले । एष बालः । वैधेन विधिभवेन तत्रभव इत्यण् । तेजउदयेन तेजस उदयेन । विशेषभास्वान् अतिशयेन कान्तिमान् । उत्तेजितो मणिरिव शाणोल्लीढो मणिरिव । विरेजे विराजितवान् । विपूर्वाद्राजृदीप्ताविल्यस्मात् लिडात्मनेपदम् । फणां च सप्तानामित्येत्वाभ्यासलोपौ । पूर्णोपमा ॥ ५ ॥

**बालाम्बुजाननविलोकनपूर्णकामो**
**भूलोकभूत्यनुभवे कृतकृत्यबुद्ध्या ।**
**ऐश्वर्यमैश्वरमनश्वरमाप तातः**
**तां बन्धुतापि समसान्त्वयदस्य पत्नीम् ॥ ६ ॥**

बालेति । तातः अस्य बालस्य पिता । बालाम्बुजाननविलोकनपूर्णकामः सन् बालस्य शंकरनाम्नः आननाम्बुजस्य मुखकमलस्य विलोकनेन पूर्णः कामः अभिलाषो यस्य स तथोक्तः सन् । भूलोकभूत्यनुभवे अनुभवविषये । कृतकृत्यबुद्ध्या कृतानि कृत्यानि अवश्यकर्तव्यानि येन स तथोक्तः । सोऽस्मीति बुद्धिः कृतकृत्यबुद्धिः तया । अनश्वरं स्थिरम् । ऐश्वरम् ईश्वरसंबन्धि ऐश्वर्यम् । आप प्राप । अस्य शिवगुरुयज्वनः पत्नी ताम् । बन्धुता बन्धुसमूहः । 'ग्रामजनबन्धुभ्यस्तल्' इति समूहार्थे तल्प्रत्ययः । समसान्त्वयत् सान्त्वं दुःखसमाधानभाषणम् कृतवती ॥ ६ ॥

तं प्रीतिभागुपनिनाय स बन्धुलोक
आर्षं वचः सफलयन् खलु पञ्चमाब्दे ।
वाञ्छन्नथोपनयनादिसमस्तलीलां
देवोऽवतीर्ण इति तत्र सभा जगाद ॥ ७ ॥

**तमिति ।** अथ अनन्तरम् । आर्षम् ऋषिप्रोक्तम् । तेन प्रोक्तमित्यण् " ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे " इत्यादिवचः । सफलयन् प्रीतिभाक् । स बन्धुलोकः । तं बालम् । पञ्चमेऽब्दे । उपनिनाय उपनयनम् चकार । तत्र उपनयनमण्डपे । सभा देवः शिवः उपनयनादिसमस्तलीलाः उपनयनवेदाध्ययनवेदान्तार्थविचारादिलीलाः । वाञ्छन् अभिलषन् सन् । अवतीर्णः अवततारेति । जगाद उवाच ॥

श्रीमांस्ततः शिवगुरोस्तनयः शिवात्म-
जातेन साम्यमधिगन्तुमवाप विद्याः ।
अष्टादशेव नयनानि विकस्वराणि
योगीश्वरत्वमुभयोरपि यौगिकं तत् ॥ ८ ॥

**श्रीमानिति ।** श्रीमान् शिवगुरोस्तनयः । शिवात्मजातेन स्कन्देन । साम्यमधिगन्तुम् । अष्टादश विद्या विकस्वराणि नयनानीव अवाप प्राप । ताश्चाह याज्ञवल्क्यः " अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम् ।" इति । उभयोरपि स्कन्दशंकराचार्ययोर्द्वयोरपि तद्योगीश्वरत्वम् । यौगिकं योगेन निर्वृत्तं यौगिकम् । 'तेन

निर्वृत्तम्' इति ठक् । अवयवार्थश्च योगिनामीश्वरत्वं शिवगुरुजातस्य शिवात्मजमात्म्योक्त्या समालंकारः । नयनानीवेत्यत्रोपमा ॥ ८ ॥

श्रीराजशेखरमवेत्य कृतावतारं
तं राजशेखरनृपः समदर्शयत्सः ।
श्रीराजशेखरसुनामकनाटकानि
सद्राजशेखरगुणानि कृतार्थतायै ॥ ९ ॥

श्रीरिति । स प्रसिद्धः । राजशेखरनृपः राजशेखराख्यः तत्रत्यो नृपः । कृतावतारं कृतः अवतारो येन स तथोक्तः । तं राजशेखरं चन्द्रशेखरं शिवम् । अवेत्य ज्ञात्वा । सद्राजशेखरगुणानि सन्तः प्रशस्ताः राजशेखरस्य शिवस्य गुणाः येषु तानि तथोक्तानि । श्रीराजशेखरसुनामकनाटकानि श्रीमन्ति राजशेखर इति सुष्ठु नाम येषां तानि तथोक्तानि । नाटकानि । कृतार्थतायै सार्थक्याय । समदर्शयत् संदर्शयामास । दृशेर्णिजन्ताल्लङ् । समासालंकारः ॥ ९ ॥

अध्यापयन्तमवलोक्य समस्तविद्या
एतं मनीषिमुकुटं प्रकटोरुशक्तिम् ।
नाम्नैव सन्गुरुरथ स्वयमात्तलज्ज-
स्तत्याज भूमिवलये सततं निवासम् ॥ १० ॥

अध्यापयन्तमिति । अथ अनन्तरम् । प्रकटोरुकीर्ति प्रकटाः प्रकाशमानाः उरवो बहवः कीर्तयो यस्य तथोक्तः । तम् । मनीषि-

मुकुटं विद्वच्चूडामणिम्। समस्तविद्या अध्यापयन्तम्। एतं शंकरनामानमवलोक्य। नाम्नैव। गुरुः जीवः। आत्तलज्जः गृहीतलज्जः सन्। एतावत् समस्तविद्याध्यापनादिति भावः। भूमिवलये भूमण्डले। सततं सर्वदा। निवासम्। तत्याज अत्याक्षीत्। सिद्धस्यैवस्वभावस्य साधनोत्प्रेक्षा॥ १०॥

गन्तुं विदूरसरितं जननीमदक्षां
वीक्ष्य द्रुतं स्वगृहसन्निधिमानयत्ताम्।
अम्बेति नाम च तदा प्रभृतीयमाप्नो-
त्किं दुष्करं जगति योगविदां बुधानाम्॥

**गन्तुमिति।** विदूरसरितं विदूरे विद्यमानां सरितं नदीम्। गन्तुं स्नानायेति शेषः। अदक्षाम् अशक्ताम्। जननीम् वीक्ष्य। सः शंकरमुनिः। स्वगृहसन्निधिम्। ताम्। द्रुतं शीघ्रम्। आनयत् आङ्पूर्वान्नयतेर्लङ्। इयं नदी। तदाप्रभृति तत्कालमारभ्य। अम्बेति नाम। आप्नोत् प्राप्तवती। अम्बार्थे समीपानयनात् अम्बेति नाम्ना प्रसिद्धाभूदिति भावः। तथाहि। योगविदां योगाभ्यासज्ञानाम्। बुधानां कोविदानाम्। जगति लोके। दुष्करं किं दुःखेन कर्तुं शक्यं किमस्ति, सर्वं सुकरमित्यर्थः। अर्थान्तरन्यासालंकारः॥ ११॥

तत्तीरगामिहरिमन्दिरमूर्मिघाते-
र्लोलं नितान्तधृतयोगबलो महात्मा।

अस्थापयत्परत एव ततोऽयमासी-
देवालयोद्धरणकृल्लघुलीलयैव ॥ १२ ॥

तदिति । धृतयोगबलः धृतं योगेन योगाभ्यासेन यद्बलं सामर्थ्यं येन स तथोक्तः । महात्मा । ऊर्मिघातैः । लोलम् । तत्तीरगामी अम्बाख्यनदीतीरस्थितम् । हरिमन्दिरम् । परत एव अन्यत्रैव । अस्थापयत् स्थापनमकरोत् । तत् तस्मात्कारणात् । लघुलीलयैव अल्पलीलयैव । अयं शंकरमुनिः । देवाल्योद्धरणकृत् आसीत् । परिकरालंकारः ॥

स्नानाय तत्र तमुपावतरीतुकामं
नक्रोऽग्रहीद्द्रुहिणशापविमोक्षणेच्छुः ।
तद्भीतिदर्शनमिषाज्जननीनियोगं
स्वीकृत्य चैष चरमाश्रमवाचमूचे ॥ १३ ॥

स्नानायेति । तत्र नद्याम् । स्नानाय उपावतरीतुकामं तं शंकरमुनिम् । द्रुहिणशापविमोक्षणेच्छुः । नक्रः । अग्रहीत् गृहीतवान् । प्राक्किल ब्रह्मणा शप्तो गन्धर्वः मनुष्यशंकरपादस्पर्शकालमेव शापावधिं प्रतीक्षमाणः नक्ररूपं प्राप्य स्थितवानिति शंकरविजयादौ सुप्रसिद्धम् । तद्भीतिदर्शनमिषात् मकरतया प्रदर्शनव्याजात् अयं मकरः मां ग्रस्यति अधुनैव प्रैषोच्चारणाय अनुज्ञां देहीति सान्त्वनेन अनुज्ञां प्राप्य । एषः । चरमाश्रमवाचं तुरीयाश्रमस्वीकाराय उच्चार्यमाणं प्रैषवाक्यम् । ऊचे उक्तवान् ॥ १३ ॥

नक्रस्तदैव दिवमेत्य विमुक्तशापो
गन्धर्वरूपमधिगत्य ततोऽवदत्तम् ।
दिव्यां तनुं ध्रुवमधां भवतः प्रसादा-
त्सर्वापराधमपि मे सहसा सहेति ॥ १४ ॥

नक्र इति । नक्रः तदैव तत्पादस्पर्शनकाल एव । विमुक्तशापः सन् विमुक्तः नक्रजन्मानुभवशापः येन स तथोक्तः सन् । ततः गन्धर्व-रूपं गन्धर्वस्वभावम् । अधिगत्य प्राप्य । दिवम् अन्तरिक्षम् । एत्य आगत्य तं शंकरमुनिम् । अवदत् उक्तवान् । अहं भवतः प्रसादात् अनुग्रहात् । दिव्यां दिवि जाताम् 'द्युप्रागपागुदक्प्रतीचो यत्' इति यत् । तनुं शरीरम् । ध्रुवं निश्चयेन अधां धृतवान् । दधातेर्लुङि उत्तमपुरुषैकवचनम् । मे मम सर्वापराधमपि सहसा बलेन सह क्षमस्व 'षह मर्षणे' इति चुरादिगणपठितात् आधृषीयत्वाण्णिचो विकल्पः । तथा च भट्टिः— 'स एवायं नागः सहति कलभेभ्यः परिभवम्' इति । एवमेव भट्टमल्लोऽप्याख्यातचन्द्रिकायाम् क्षान्तौ सहति शक्यति मृष्यतीदं मर्षति च' इत्यादि ॥ १४ ॥

अम्ब स्मरिष्यसि यदानु तदा समीप
एवास्म्यथेति जननीमनुनीय पश्चात् ।
प्रागाश्रमे शिवगुरोस्तनुजः शिवस्य
वंशं तथा गुरुकुले च समालुलोचे ॥ १५ ॥

अम्बेति । अथ प्रैषोच्चारणानन्तरम् । हे अम्ब मातः । यदा यस्मिन् काले । पश्चात् मत्संनिध्यभावे स्मरिष्यसि मामिति शेषः । तदानु समीप एव तवेति शेषः । अस्मि वर्ते इति जननीं मातरम् । अनुनीय सान्त्वयित्वा । प्रागाश्रमे पूर्वाश्रमे । शिवगुरोः शिवगुरुदीक्षितस्य तनुजः पुत्रः । अयं शंकरमुनिः । तथा तेन प्रकारेण । गुरुकुले च । यतिपरंपरायां च शिवस्य वंशम् । समालुलोचे आलोचयामास ॥ १५ ॥

यस्तारकं प्रददते सनकादियोगि-
वन्द्याकृतिः स शिव आदिगुरुः प्रतीतः ।
नारायणस्तत उदञ्चिततत्त्वबोधः
पद्मासनोऽथ तदनुग्रहभाग्बभूव ॥ १६ ॥

य इति । यः शिवः । तारकं तारकमन्त्रं तारयत्यात्मतत्त्वज्ञानेनेति तारकम् । प्रणवः शिवपञ्चाक्षरी रामषडक्षरः महावाक्यं वा तारकमन्त्राः । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे । येनासावमृतीभूत्वा मोक्षीभवतीति च्छान्दोग्यजाबालाद्युपनिषत्सु दर्शनात् । तारकं मन्त्रम् । प्रददते उपदिशति । धातूनामनेकार्थत्वात् ददधातुरुपदेशार्थकः न तु मुख्यार्थकः स्वत्वनिवृत्त्यभावात् । सनकादियोगिवन्द्याकृतिः सनकः आदिः येषां तैः योगिभिः वन्द्या स्तुत्या नम्या वा आकृतिः दक्षिणामूर्तिविग्रहः यस्य स तथोक्तः । स शिवः आदिगुरुः । गृणाति हितमुपदिशतीति गुरुः

'गॄ शब्दे' इत्यस्मात् कृग्रोरुच्चेत्युप्रत्ययः। आदिश्चासौ गुरुश्चेत्यादिगुरुः। प्रतीतः प्रसिद्धः। 'तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये' 'उपायोपेयरूपाय शिवाय गुरवे नमः' इत्याद्यभियुक्तोक्तयः प्रमाणम्। ततः तस्मात् शिवात्। नारायणः उदञ्चिततत्त्वबोधः उदञ्चितः उदितः तत्त्वबोधः तत्त्वज्ञानं यस्य स तथोक्तः। अभवत् 'उत्पन्नतत्त्वज्ञानोऽथ बभूव नृपनन्दनः' इति पाद्मे शिवगीतायां सप्तमाध्यायमध्ये 'तत्सर्वं पृच्छ राम त्वं मत्तो नान्योऽस्ति ते गुरुः' इत्यन्ते चोक्तत्वात्। शिवरहस्यादिषु विष्ण्वनुग्रहप्रतिपादनाच्च। अथ पद्मासनः ब्रह्मा। तदनुग्रहभाक् तस्य विष्णोरनुग्रहं भजतीत्यनुग्रहभाक्। भागवतादिषु ब्रह्मणो विष्ण्वनुग्रहप्रतिपादनात् तदन्तेवासी बभूव ॥ १६ ॥

**छात्रो वसिष्ठमुनिरस्य स यो व्यजेष्ट**
**ब्राह्मं बलं प्रकटयन्कुशिकात्मजातम् ।**
**शिष्योऽस्य शक्तिरभवद्धृतमन्त्रशक्तिः**
**शिष्यः पराशरमुनिः समभूदमुष्य ॥ १७ ॥**

**छात्र इति**। यः वसिष्ठः। ब्राह्मं ब्रह्मण इदं ब्राह्मम् 'तस्येदम्' इत्यण्। 'ब्रह्मा विप्रः पितामहः' इत्यमरः। बलं तेजः प्रकटयन् प्रकाशयन्। कुशिकात्मजातं विश्वामित्रम्। व्यजेष्ट विजितवान्। 'विपराभ्यां जेः' इति तङ्। सः वसिष्ठः मुनिः अस्य ब्रह्मणः। छात्रः शिष्यो बभूव इति पूर्वेणान्वयः। धृतमन्त्रशक्तिः धृता मन्त्रशक्तिः

येन स तथोक्तः । शक्तिः शक्तिमुनिः अस्य वसिष्ठस्य शिष्यः अभवत् । अमुष्य शक्तेः पराशरमुनिः शिष्यः समभूत् ॥ १७ ॥

विख्यातिमान्समभवत्तत आत्तबोधो
व्यासो महर्षिरपि यो विबभाज वेदान् ।
अष्टादशापि च पुराणगिरः समस्ताः
येनाखिलैकगुरुणैव जगत्सु रेजुः ॥ १८ ॥

विख्यातेति । ततः पराशरात् आत्तबोधः गृहीततत्त्वज्ञानः । महर्षिः व्यासः विख्यातिमान् प्रसिद्धिमान् । अभवत् । यो व्यासो वेदानपि । अपिशब्देन वेदानामानन्त्यं महत्त्वं च द्योत्यते । विबभाज विभक्तान् कृतवान् । 'भज सेवायाम्' इत्यस्माल्लिट् । अपि च अखिलैकगुरुणा अखिलानां सर्वेषां एकेन मुख्येन गुरुणा येन व्यासेन प्रशस्ताः अष्टादशापि पुराणगिरः पुराणवाक्यानि । जगत्सु लोकेषु । रेजुः प्रकाशितानि । 'राज दीप्तौ' इत्यस्माल्लिट् । तानि च पुराणानि— 'ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते । तृतीयं वैष्णवं चैव प्रोक्तं शैवं चतुर्थकम् । तथा भागवतं प्रोक्तं पञ्चमं षष्ठमुच्यते । भविष्यन्नारदीयं च सप्तमं परिकीर्तितम् । मार्कण्डेयमिति प्रोक्तमष्टमं नवमं तथा । आग्नेयं ब्रह्मवैवर्तं दशमं परिकीर्तितम् । लैङ्गं च वामनं चैव स्कान्दं मात्स्यं तथैव च । कौर्मं वाराहगीतं च गारुडं चाथ कीर्तितम् । ब्रह्माण्डमित्यष्टदश पुराणानि विदुर्बुधाः' इति ॥ १८ ॥

येनाद्भुता विरचिता वरसूत्रमाला
ब्रह्मावबोधिवचनार्थमणीगणाढ्या ।
भाष्यं व्यधायि च पतञ्जलिभाषितस्य
येन व्यभासि भुवि भारतवाक्यसारः ॥ १९ ॥

येनेति । ब्रह्मावबोधिवचनार्थमणीगणाढ्या ब्रह्म परमात्मस्वरूपं अवबोधयन्ति तच्छीलानि ब्रह्मावबोधीनि यानि उपनिषद्वाक्यानि तेषामर्था एव मण्यः तासां गणैः समूहैः आढ्या पुष्कला। मणीत्यत्र इप्रत्ययान्तात् 'कृदिकारादक्तिनः' इति ङीप् । अद्भुता आश्चर्यकरी । वरसूत्रमाला वराणां उत्तमानां सूत्राणां माला वेदान्तशास्त्रम् अथातो ब्रह्मजिज्ञासेत्यारभ्य अनावृत्तिःशब्दादित्यन्तम् उपनिषद्वाक्यार्थनिर्णयपरम्पराशोभितं येन विरचिता कृता अस्तीति शेषः । येन पतञ्जलिभाषितस्य पतन्तः अञ्जलयो यस्मिन्निति व्युत्पत्त्या सर्वनमस्कार्येण महता आचार्येण पतञ्जलिना भाषितस्य निगदितस्य योगशास्त्रस्य भाष्यं व्यधायि अकारि विपूर्वाद्धातेर्लुङः चिण्। 'आतो युक्चिण्कृतोः' इति युक्। येन भुवि भारतवाक्यसारः महाभारतरूपवाक्यसारः । व्यभासि विभासितः। 'भासृ दीप्तौ' इत्यस्माल्लुङि चिण्। सः व्यासः समजनि समभवदिति पूर्वेणान्वयः । पूर्वार्धे अर्थेषु मणीत्वारोपणात् सूत्रेषु श्लेषेण सूत्रत्वाध्यवसानाच्च सावयवरूपकम् ॥ १९ ॥

तद्वाक्यकल्पतरुसंभवतत्त्वबोध-
भूयःफलग्रहकृते शुकवत्प्रवर्ण्यः ।

यस्यां शुकोऽस्य वरशिष्य उदैदुदारो
यद्ब्रह्मचर्यमखिलाप्सरसोऽतियातृ ॥ २० ॥

तदिति । यस्यां पङ्क्तौ तद्वाक्यकल्पतरुसंभवतत्त्वबोधभूयःफलग्रहकृते तानि प्रसिद्धानि वाक्यानि ब्रह्मसूत्रयोगभाष्यपुराणादीनि तान्येव कल्पतरवः तेभ्यः संभवो येषां तानि तथोक्तानि तत्त्वबोधा एव भूयांसि फलानि, तेषां ग्रहस्य ग्रहणस्य कृते तदर्थम् । शुकवत् कीरवत् प्रवर्ण्यः प्रकर्षेण वर्ण्यः स्तुत्यः । उदारः महान् । 'उदारो दातृमहतोः' इत्यमरः । यद्ब्रह्मचर्यं यस्य ब्रह्मचर्यं ब्रह्मणि तपश्चर्या । अखिलाप्सरसोऽतियातृ । अखिलाः समस्ताः अप्सरसः ऊर्वश्याद्याः ताः अतिशयात् अतिक्रमत् । कर्तरि तृन् । 'न लोकाव्यय' इति षष्ठीनिषेधः । सः शुकः अस्य व्यासस्य वरशिष्यः मुख्यशिष्यः उदैत् उदितः । उत्पूर्वादिणो लङ् । वाक्यस्य कल्पतरुत्वारोपणात् तत्त्वबोधस्य फलत्वारोपणाच्च सावयवरूपकम् । शुकवदित्यलोपमा । तयोरङ्गाङ्गिभावेन सङ्करः । अप्सरसामतियातुः ब्रह्मचर्यस्य महत्वसमर्थकत्वात् काव्यलिङ्गध्वनिः ॥ २० ॥

श्रीगौडपादमुनिरस्य विभासते स्म
च्छात्रोऽजयिष्ट विबुधानपि गौडगान्यः ।
तत्त्वोपदेशविषयान्विदधे प्रबन्धा-
नाचार्य आद्यविदितोऽत्र महान्हि पङ्क्तौ ॥

श्रीति । श्रीगौडपादमुनिः गौडपादाख्यो मुनिः अस्य शुकस्य

च्छात्रः शिष्यः। विभासते स्म। यः गौडपादमुनिः गौडगानपि गौड-देशीयानपि। अपिशब्दो महत्त्वं द्योतयति। विबुधान् पण्डितान्। अजयिष्ट विजितवान्। यः तत्त्वोपदेशविषयान् तत्त्वकथनगोचरान् प्रबन्धान् महाकृतीः विदधे चकार। सः गौडपादमुनिः अत्र पङ्क्तौ गुरुपरंपरायाम् आद्यः आचार्यः। आसमन्तात् चारयति बोधयति शिष्यानिति आचार्यः। आङ्पूर्वात् चरतेर्णिजन्तात् 'अचो यत्' इति यत्। आचारमर्हतीत्याचार्य इति वा। तदर्हतीत्यधिकारे दण्डादित्वा-द्यत्। आचरति शास्त्रार्थानिति वा। 'ऋहलोर्ण्यत्' इति ण्यत्। 'उप-नीय तु यः शिष्यम्' इत्यादि मनुयाज्ञवल्क्यादिस्मृत्युक्तम् अत्रासंभ-वान्न गृह्यते। उक्तं निर्वचनमभियुक्ता अप्याहुः 'स्वयमाचरते शिष्यान् आचारे स्थापयत्यपि। आचिनोति च शास्त्रार्थमाचार्यस्तेन कथ्यते' इति। यास्कोऽप्याह 'आचार्यः कस्मादाचार्य आचारं ग्राहयति आचि-नोत्यर्थानाचिनोति वा' इति। 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरश्च। विदितः प्रसिद्धः अभवदिति शेषः॥ २१॥

**गोविन्दपादमुनिरस्य चकास्ति शिष्यो**
**यस्यात्रभाति भगवत्पदमन्वितार्थम्।**
**विन्दन्य उत्तमगवीर्विहितार्थनामा**
**ज्ञेयान्यवैतुमसुमेमि तमञ्जसेति॥ २२॥**

गोविन्देति। यस्य मुनेः भगवत्पदं अन्वितार्थम् अन्वितः संब-द्धः अर्थो यस्मिन् तत्तथोक्तम्। अर्थश्च 'ऐश्वर्यस्य समग्रस्य वीर्यस्य

यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवान्' इति च प्रसिद्धः । सः गोविन्दपादमुनिः अस्य गौडपादाचार्यस्य शिष्यश्चकास्ति । यः उत्तमगवीः उत्तमवाचः । गोरतद्धितेति समासान्तटच् । टित्वात् ङीप् । विन्दन् लभमानः । गोविन्दे 'विद्लृ लाभे' इति धातोः गवादिषु विन्देः संज्ञायामिति शप्रत्यये शे मुचादीनामिति नुम् । विदितः अर्थः यस्य तत्तथोक्तं नाम यस्य तम् अमुं ज्ञेयानि स्वाश्रमधर्मादीनि अवैतुं ज्ञातुम् अञ्जसा द्रुतम् । एमि गच्छामि । इतिशब्दस्य समालुलोच इति पूर्वेणान्वयः ॥ २२ ॥

**हृद्येवमाकलयिता दृढमर्थमेत-**
**दाचार्यसन्निधिमगात्किल योगिबालः ।**
**संन्यासधर्ममखिलं कलयांचकार**
**सर्वास्तथोपनिषदोऽवगतार्थमस्मात् ॥ २३ ॥**

हृदीति । स योगिबालः । योगी चासौ बालश्चेति कर्मधारयः । हृदि हृदये । एवं पूर्वोक्तप्रकारेण दृढं आकलयिता ज्ञाता एतदाचार्यसन्निधिम् एतस्याचार्यस्य सन्निधिं समीपम् । अगात् गतवान् । 'इणो गा लुङि' इति गादेशः । किलेति वार्तायाम् । तस्मात् गोविन्दभगवत्पादाचार्यात् । अखिलं समस्तं संन्यासधर्मं विश्वेश्वरस्मृत्युक्तम् । तथा सर्वा उपनिषदः अवगतार्थं उपनिषीदति ज्ञानमस्यामिति अवगतः ज्ञातः अर्थो यस्मिन्कर्मणि तत्तथा । कलयांचकार अधीतवान् ॥ २३ ॥

वैराग्यभाग्यभरयोग्यसुनिर्मलात्मा
धीराग्रगण्यगुणविद्गुरुहर्षदायी ।
द्वैपायनाभिहितसूत्रसमूहशास्त्रं
जग्राह तस्य वचनैरखिलं च वेद्यम् ॥ २४ ॥

**वैराग्येति** । वैराग्यभाग्यभरयोग्यसुनिर्मलात्मा विगतश्चासौ रागश्च विरागः सोऽस्यास्तीति विरागी तस्य भावस्तत्त्वं वैराग्यम् । तल्लक्षणं च अभ्यधायि योगसूत्रे पतञ्जलिना 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' इति । तदेव भाग्यम् ऐश्वर्यं तस्य भरः अतिशयः तस्य योग्यः सुष्ठु निर्मलः आत्मा अन्तःकरणं यस्य स तथोक्तः । धीराग्रगण्यगुणविद्गुरुहर्षदायी धीराणां प्राज्ञानां अग्रे गण्यः गणयितुं योग्यः गुणान् वेत्तीति गुणवित् । 'विद ज्ञाने' इत्यस्मात् क्विप् । स चासौ गुरुश्च तस्य हर्षं ददातीति तच्छीलः । सुप्यजाताविति ताच्छील्ये णिनिः । स इति शेषः । द्वैपायनाभिहितसूत्रसमूहशास्त्रं द्विर्गता आपोऽस्मिन्निति द्वीपं द्वीपमेव द्वैपम् । स्वार्थिकोऽण् । तदेव अयनं उद्भवस्थानं यस्य स तथोक्तः द्वैपायनो व्यास तेन अभिहितं सूत्रसमूहात्मकं शास्त्रम् । अखिलं समस्तम् । वेद्यं वेत्तुमर्हं रहस्यार्थजातं च । तस्य गुरोः । वचनैः वाक्यैः । जग्राह 'ग्रह उपादाने' इत्यस्माल्लिट् । परिकरालंकारः । धीराग्रगण्येत्यत्र श्लेषोऽपि ॥ २४ ॥

भाष्याण्यथाकुरुत तत्र सहस्रनाम-
गीतादशोपनिषदां विशदार्थकानि ।

व्यासोक्तसूत्रनिवहस्य सनत्सुजात-
वाचां यतीश उपदेशसहस्रिकां च ॥ २५ ॥

भाष्याणीति । अथ अनन्तरम् । यतीशः यतन्ते मोक्षार्थं यत्नं कुर्वन्तीति यतयः तेषामीशः यतीशः । तत्र गुरुसंनिधौ । सहस्रनामगीतादशोपनिषदां सहस्रनाम्नां विष्णोः सहस्रनाम्नां गीतायाः भीष्मपर्वस्थकृष्णार्जुनसंवादरूपगीतायाः दशोपनिषदाम् ईशकेनकठप्रश्नमुण्डकमाण्डूक्यतैत्तिरीयैतरेयकबृहदारण्यकछान्दोग्यानाम् । व्यासोक्तसूत्रनिवहस्य व्यासोक्तानां सूत्राणां निवहस्य समूहस्य । सनत्सुजातवाचां सनत्सुजातोक्तीनाम् विशदार्थकानि विशदः व्यक्तः अर्थो येषां तानि तथोक्तानि । भाष्याणि 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' इति पराशरोपपुराणोक्तलक्षणानि । तथा उपदेशसहस्रिकां तदाख्यां कृतिं च । अकुरुत कृतवान् ॥ २५ ॥

सौन्दर्यपूर्वलहरीमकरोत्प्रपञ्चसारं
मुनिः स सुभगोदयपद्धतिं च ।
स्तोत्राणि लोकमहिताखिलदेवतानां
नानाविधार्थगुणरीतिविचित्रितानि ॥ २६ ॥

सौन्दर्येति । स मुनिः मननशीलः । मनेरुच्चेति इन् अकारस्योकारादेशः । सौन्दर्यपूर्वलहरीं सौन्दर्यं सौन्दर्यपदं पूर्वं यस्याः सा

तथोक्ता लहरी सौन्दर्यलहरी । 'सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवः' इतिवत्। मेघसन्देशे कालिदासोऽपि 'देवपूर्वं गिरिं ते' इति। प्रपञ्चसाराख्यं ग्रन्थम्। सुभगोदयपद्धतिं तन्नामकं मन्त्रशास्त्रग्रन्थं च। लोकमहिताखिलदेवतानां लोकैः महिताः पूजिताः तासामखिलदेवतानाम् । नानाविधार्थगुणरीतिविचित्रितानि नानाविधाः अनेकप्रकाराः अर्थाः पदार्थाः गुणाः ओजःप्रसादादयः शब्दगुणा अर्थगुणाश्च रीतयो वैदर्भ्यादयः ताभिः विचित्रितानि विशिष्टचित्रं विचित्रम् आश्चर्यं तदेषां सञ्जातानि विचित्रितानि। तदस्य संजातामिति तारकादित्वादितच्। स्तोत्राणि अकरोत् विरचितवान्। गुणरीतीत्यत्र गुणास्तु काव्यप्रकाशे 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः' इति लक्षिताः । परिगणितांश्च प्रतापरुद्रीये 'ओजः सुशब्दता प्रेयान् और्जित्यं विस्तरस्तथा। समाधिः सौम्यगाम्भीर्ये संक्षेपो भाविकं तथा। श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थशक्तिरुदारत्वं तथा कान्तिरुदारता' इत्यादयः। अलङ्कारसूत्रे तु 'ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः' इति दशस्वेवान्तर्भाविताः। काव्यप्रकाशे तु 'माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश' इति त्रिष्वेवान्येषामन्तर्भावः उक्तः। रीतिलक्षणं तु 'रीतिर्नाम गुणाश्लिष्टपदसङ्घटनात्मिका' इति। सूत्रं च 'विशिष्टा पदरचना रीतिः'। 'सा त्रिधा वैदर्भी गौडी पाञ्चाली च' इत्यादि। आसां कैशिकादिवृत्तिष्वन्तर्भाव इति काव्यप्रकाशकारः । एषां पृथग्लक्षणानि तु ग्रन्थविस्तरभयात् नेह प्रपञ्च्यन्ते ॥ २६ ॥

आज्ञामवाप्य सहसैव गुरोरनुज्ञां
ज्ञानप्रकर्षहसितोल्लसिताननः सः ।
तीर्थानि पर्यटितुकाम उदारचेताः
शिष्यैर्वृतो बदरिकाश्रममाससाद ॥ २७ ॥

आज्ञामिति । ज्ञानप्रकर्षहसितोल्लसिताननः ज्ञानस्य प्रकर्षेण अतिशयेन यत् हसितं हासः तेन उल्लसितम् आननं मुखं यस्य स तथोक्तः । उदारचेताः उदारमर्हति चेतो यस्य स तथोक्तः । सः शङ्कराचार्यः । सहसैव बलात्कारेणैव । अमुष्य गुरोः गोविन्दभगवत्पादस्य आज्ञाम् अनुज्ञाम् । अवाप्य प्राप्य । सहसैवेत्यनेन वात्सल्याद्गुणवतः छात्रस्य समीप एवावस्थाने गुरोरभिलाषः सूचितः । तीर्थानि पुण्यक्षेत्राणि । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इत्यमरः । पर्यटितुकामः पर्यटितुं सञ्चरितुं कामः अभिलाषो यस्य स तथोक्तः । शिष्यैर्वृतः । बदरिकाश्रमम् । आससाद प्राप्तवान् । युतशब्दं विहाय वृतशब्दोपादानं तु शिष्यकर्तृकं तीर्थसंचारप्रार्थनं द्योत्यते । 'सर्वाणि पुण्यतीर्थानि सेव्यान्येव मुमुक्षुभिः' इति मुमुक्षूणां सेवावश्यकतोक्तेः ॥ २७ ॥

बालोऽप्ययं प्रतिदिनं सलिलेऽतिशीते
स्नातीति जातकरुणो जगदीश एव ।
उष्णीचकार सलिलं सुखमज्जनार्थ-
मद्यापि तीर्थमिदमुष्णमुदीरयन्ति ॥ २८ ॥

**बाल इति** । अयं शङ्कराचार्यः । बालोऽपि अतिशीते सलिले प्रतिदिनं स्नाति स्नानं करोति । 'ष्णा शौचे' इत्यादिकाल्लट् । इति हेतोः । जातकरुणः जाता करुणा दया यस्य स तथोक्तः । जगदीश एव परमेश्वर एव । सुखमज्जनार्थं सुखेन मज्जनाय । सलिलम् । उष्णीचकार अनुष्णं उष्णीचकार । 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः' इति च्विप्रत्ययः । 'अस्य च्वौ' इति ईकारः । अद्यापि । इदं तीर्थम् । उष्णतीर्थमित्युदीरयन्ति कथयन्ति । लोका इति शेषः । 'ईर क्षेपे' इत्यस्मात् चौरादिकाण्णिच् ॥ २८ ॥

**वेदान्तशास्त्रविषयान्प्रविचारयन्तं**
**तत्र स्थितं सह महर्षिभिरन्वहं तम् ।**
**दृष्ट्वागतैर्निगदितो बहुभिः स वेद-**
**व्यासोऽपि शीघ्रमिदमन्तिकमाजगाम ॥ २९ ॥**

**वेदान्तेति** । तत्र बदरिकाश्रमे । महर्षिभिः मन्वादिभिः । सः अन्वहम् अनुदिनम् । वेदान्तशास्त्रविषयान् वेदान्तशास्त्रं चतुरध्यायीरूपं ब्रह्मसूत्रजातं तस्य विषयान् तत्रत्यान् प्रमेयान् प्रविचारयन्तं पकर्षेण विमर्शयन्तम् । स्थितं तं शङ्कराचार्यम् । दृष्ट्वा आगतैः बहुभिः तैरेव निगदितः उक्तः । स वेदव्यासोऽपि वेदान् व्यस्यति विवृणोतीति वेदव्यासः । 'कर्मण्यण्' । अपिशब्देन महत्त्वं द्योत्यते । इदमन्तिकम् अस्य समीपम् । शीघ्रम् आजगाम । आङ्पूर्वाद्गमेर्लिट् ॥ २९ ॥

प्रत्युज्जगाम तमयं सह योगिचन्द्रः
शिष्यैर्विधाय विविधामुचितां सपर्याम् ।
मान्यं यथार्हमुपवेश्य परासने तं
पप्रच्छ चारु कुशलं विनयावनम्रः ॥ ३० ॥

प्रत्युज्जगामेति । योगिचन्द्रः योगी चन्द्र इवेत्युपमितसमासः । अयं शङ्कराचार्यः । शिष्यैः सह । तं वेदव्यासम् । प्रत्युज्जगाम अभिययौ । प्रत्युत्पूर्वाद्गमेर्लिट् । तथा च कालिदासः 'प्रत्युज्जगामातिथिमातिथेयः' इति । विविधां बहुप्रकाराम् । उचितां स्वाश्रमधर्मोचिताम् । सपर्यां पूजाम् विधाय । मान्यं पूज्यम् । अमुं परासने यथार्हं यथायोग्यम् । युक्तमनतिक्रम्य यथासादृश्य इत्यव्ययीभावः । उपवेश्य उपपूर्वाद्विशतेर्णिजन्तात्समासे क्त्वो ल्यप् । विनयावनम्रः विनयेन अवनम्रः प्रह्वः सन् । कुशलं क्षेमम् । चारु मनोहरं यथा स्यात् तथा पप्रच्छ । 'प्रच्छ ज्ञीप्सायाम्' इत्यस्माल्लिट् ॥ ३० ॥

स्वामिन् कृतार्थमथ जन्म तवेक्षणेन
कारुण्यपूर्ण जगदुद्धरणैककार्य ।
अद्योदिते भवति भास्वति मामकीन-
हृत्पङ्कजं विकचमाशु मुने विभाति ॥ ३१ ॥

स्वामिन्निति । अथ कुशलप्रश्नानन्तरम् । हे स्वामिन् ईश्वर । तव वीक्षणेन दर्शनेन जन्म कृतार्थं कृतः अर्थः प्रयोजनं येन तत्त-

थोक्तम् अभूदिति शेषः । अर्थान्ममेति संबध्यते । कारुण्यपूर्ण हे दयासंपन्न । जगतामुद्धरणं जगदुद्धरणं तदेव एकं मुख्यं कार्यं यस्य स तथोक्तः तस्य संबोधनम् । हे मुने हे वेदव्यास । भवति त्वयि । भास्वति सूर्ये अत्र अस्मिन्नाश्रमे उदिते उदयवति सति । मामकीनहृत्पङ्कजं ममेदं मामकीनम् । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति खञ्प्रत्ययः । 'तवकममकावेकवचने' इति ममकादेशश्च । हृत्पङ्कजं हृत्कमलम् । विकचं विकासितम् । आशु शीघ्रम् । विभाति भा दीप्तावित्यस्माल्लट् । मुनेर्भास्वत्त्वारोपणात् हृदयस्य पङ्कजत्वारोपणाच्च रूपकयोरङ्गाङ्गिभावः ॥ ३१ ॥

**द्वैतस्थितिप्रविगमं समगाज्जनानां**
**कोकावलेरिव गतं च कुधीतमिस्रम् ।**
**योगीन्द्र वाग्मिवर किं त्वमिहागतोऽसि**
**स्नेहेन मे त्रिवदिषां परिपूरयाशु ॥ ३२ ॥**

**द्वैतस्थितिरिति** । कोकावलेरिव चक्रवाकश्रेणेरिव । जनानाम् । द्वैतस्थितिः प्रविगमं अवगमम् । समगात् संप्राप्तः । 'इणो गा लुङि' इति गादेशः । कुधीतमिस्रं कुबुद्ध्यन्धकारश्च गतम् । वागेषामस्तीति वाग्मिनः प्रशस्तवाचः । 'वाचो ग्मिनिः' इति मत्वर्थे ग्मिनिः । कुत्सित इति वक्तव्यमिति वार्तिकेन आलजाटचोः कुत्सायामेव विवक्षितत्वेन अत्र प्रशंसैव गृह्यते । 'वाचोयुक्तिपटुर्वाग्मी' इत्यमरोऽपि । तेषां वरः श्रेष्ठः तस्य संबोधनम् । हे वाग्मिवर हे योगीन्द्र योगिराज । इह अत्र ।

त्वं किमागतोऽसि । स्नेहेन प्रेम्णा । मे मम । विविदिषां जिज्ञासां विद ज्ञाने इत्यस्मात्सन् । विचारार्थकरुधादेस्तु न, अनिट्कत्वात् । तथा चाहुः— पद्मभिद्विद्यतिर्विनदिति । आशु शीघ्रम् । परिपूरय 'पूरी आप्यायने' इत्यस्मात् हेतुमण्णिजन्ताल्लोट् । कोकावलेरिवेत्यत्रोपमा । अस्या रात्रौ स्त्रीपुंसयोः पृथक्स्थितिरेव द्वैतस्थितिः । उक्तं च कल्पलतायाम् 'विभावर्यां भिन्नतटाश्रयणं चक्रवाकयोः । ज्योत्स्नापानं चकोराणां वर्णयेदसदप्यदः ' इति । कुधीत्यत्र कोकपक्षे 'कु पापीयसि निन्दायामीषदर्थे निवारणे । कुस्तु भूमौ च शब्दे च ' इत्येकाक्षरकोशात् । विरहानुगुणो यः कोऽप्यर्थो ग्राह्यः द्वैतकुधीशब्दयोः श्लेषोऽपि ॥ ३२ ॥

इत्युक्तवन्तममुमाशु मुनिर्जगाद
त्वं चन्द्रवत्सकललोकविलोकनार्हः ।
मत्स्वान्तकैरवविकासकरोऽसि योगि-
न्भाष्यं त्वदीयमवलोकितुमागतोऽस्मि ॥

इतीति । इत्यनेन प्रकारेण उक्तवन्तम् । अमुं शंकराचार्यम् । मुनिर्वेदव्यासः । आशु शीघ्रम् । जगाद उवाच । हे योगिन् । त्वं चन्द्रवत् चन्द्रेण तुल्यम् । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । सकललोकविलोकनार्हः सकलानां सर्वेषां लोकानां विलोकनस्य दर्शनस्य अर्हः योग्यः । मत्स्वान्तकैरवविकासकरः मम स्वान्तं हृदयं तदेव तस्य विकासं करोतीति तच्छीलः तथोक्तः । असि । त्वदीयं त्वया प्रोक्तं इत्यर्थे 'त्यदादीनि च' इति वृद्धत्वा-

च्छः । भाष्यं प्रागुक्तलक्षणाक्रान्तं ब्रह्मसूत्रभाष्यम् अवलोकितुम् आगतः अस्मि । इति जगादेति पूर्वेणान्वयः ॥ ३३ ॥

इत्थं सुभाषितवते मुनये स योगी
प्रादर्शयत्सविनयं कृतसूत्रभाष्यम् ।
दृष्ट्वा तदाधिकरणेषु स तत्र तत्र
ज्ञात्वाशयानुदितहर्ष इदं बभाषे ॥ ३४ ॥

इत्थमिति । इत्थम् अनेन प्रकारेण । सुभाषितवते सु मनोहरं भाषितवते उक्तवते 'भाषव्यक्तायां वाचि' इत्यस्मात् क्तवतु-प्रत्ययः । सुष्ठु भाषितं भाषणं भावे क्तः । तद्वान् । तदस्या-स्तीति मतुप् । तस्मै सुभाषितवते इति वा । मुनये वेदव्यासाय स योगी शंकराचार्यः । सविनयं विनयेन सह यथा स्यात् तथा कृतसूत्रभाष्यं कृतं च तत् सूत्रभाष्यं च कृतसूत्रभाष्यं प्रादर्शयत् प्रदर्शितवान् । प्रपूर्वकदृशोर्णिजन्ताल्लङ् । तदा तदानीम् । सः वेद-व्यासः । दृष्ट्वा तत्र तत्र तेषु तेषु स्वाभिमतप्रदर्शनपरमतनिरसनो-पयोगिषु अधिकरणेषु 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्' इति लक्षितेषु आश-यान् स्वाभिप्रायानेव सर्वत्र प्रकटीकृतान् ज्ञात्वा । उदितहर्षः संजातसंतोषः । इदं वक्ष्यमाणम् वाक्यम् । बभाषे भाषितवान् ॥

भाष्यं महार्थमकरोर्मम सूत्रराशेः
गम्भीरमुक्तिललितं प्रतिसूत्रमेतत् ।

न त्वां विना रचयितुं गुरुणापि शक्यं
श्रीशंकरार्य ननु शंकर एव भासि ॥ ३५ ॥

भाष्यमिति । श्रीशंकरार्य । मम मत्संबन्धिनः सूत्रराशेः ब्रह्मसूत्रसमूहस्य । महार्थं महान्तो अर्थाः यस्मिन् तत्तथोक्तम् । भाष्यम् । अकरोः कृतवानभूः । प्रतिसूत्रं सूत्रं सूत्रं प्रतिसूत्रम् । 'अव्ययं विभक्ति' इत्यादिना यथा शब्दार्थे वीप्सायामव्ययीभावः । उक्तिललितम् उक्तिभिः सूक्तिभिः ललितं मनोहरं गम्भीरं दुर्गममेतद्भाष्यम् । रचयितुं विधातुम् । त्वां विना गुरुणापि वाचस्पतिनापि 'गुरुस्तु गीष्पतौ श्रेष्ठ गुरौ पितरि दुर्भरे' इति विश्वः । न शक्यम् 'शकिसहोश्च' इति यत् । अत एव त्वं शंकर एव शिव एव भासि दीप्यसे । नन्विति निश्चये, 'प्रश्नावधारणानुज्ञाविनयामन्त्रणे ननु' इति अमरः । 'ईशानः सर्वविद्यानमीश्वरः सर्वभूतानाम्' इति श्रुत्यवगतेश्वरांशत्वं विना एतादृशसामर्थ्यं नास्तीति ज्ञात्वा उक्तवानिति भावः । काव्यलिंगालंकारः ॥ ३५ ॥

एवं ब्रुवन्स तमुवाच विवृद्धमायु-
र्भूयात्तव प्रकटयाद्वयशास्त्रमुर्व्याम् ।
इत्याशिषास्य मुदितो निजगाद योगी
त्वद्दर्शनाज्जयतु भाष्यमिदं भुवीति ॥ ३६ ॥

एवमिति । एवमनेन प्रकारेण । ब्रुवन् स वेदव्यासः, तं शंकराचार्यं प्रति, तव आयुः विवृद्ध भूयात् । उर्व्यां भूमौ । अद्वयशास्त्रं

द्वौ अवयवौ यस्य तत् द्वयम् 'संख्याया अवयवे तयप्' इति तयप्। 'द्वित्रिभ्यां तयस्यायज्वा' इत्ययजादेशः। न द्वयम् अद्वयं तस्य शास्त्रं शास्ति विविच्य बोधयतीति शास्त्रम्। 'शासु अनुशिष्टौ' इत्यस्मात् 'सर्वधातुभ्यः ष्ट्रन्' इति कर्तरि ष्ट्रन्। शास्त्रशब्दस्य मुख्यार्थो वेद एव शास्त्रयोनित्वाधिकरणे सर्वैरप्यभियुक्तैः प्रतिपादितत्वात् तस्य अङ्गेषु मुखप्रभृतिषु व्याकरणेषु उपाङ्गेषु ब्रह्मरन्ध्रप्रमुखेषु वेदान्तादिषु पाद्मोक्तेषु स्मृतिषु कलासु तन्त्रेषु संहितासु च शास्त्रशब्दव्यवहारः औपचारिकः। अयं कचित्कचित् अवयवेष्वपि बोध्यः। महाभाष्यकारैः 'समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते तद्यथापूर्वे पाञ्चाला उत्तरे पाञ्चालाः' इति पस्पशाह्निके व्याकरणशब्दार्थप्रघट्टके ऊरीकृतत्वात्। अत एव माधवाचार्यैः न्यायरत्नमालायां सूत्रजातं शास्त्रमित्युक्तम्। मीमांसासूत्रदीधितौ राघवानन्दसरस्वतीभिः सूत्रसंदर्भे शास्त्रशब्दो व्यवहृतः ग्रन्थादिभागे तत्र तत्र मीमांसासूत्रसंदर्भः अथातो धर्मजिज्ञासेत्यादिः अन्वाहार्ये च दर्शनादित्यन्तः शास्त्रं शास्यते धर्माख्यं हितमनेनेति। 'एकदेशस्थिता शास्त्रभवने याति दीपताम्। परितो व्यापृतां भाषां परिभाषां प्रचक्षते' इति व्याकरणतन्त्रग्रन्थमात्रे शास्त्रमुदीरयामासुः वाक्यपदीयकाराः। 'शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम्। आहुः प्रकरणं नाम' इति ग्रन्थसमूहे ग्रन्थावयवेऽपि शास्त्रशब्दं जगदुः। पतञ्जलिमहर्षयोऽपि शब्दानुशासनं शास्त्रमधिकृतं वेदितव्यमिति सूत्रसमूहस्यापि शास्त्रत्वं व्याचक्षाणाः शास्त्रातिदेशः शास्त्रासिद्धम् जातीयशास्त्रम् आगमशास्त्राम् इतरेतराश्रयाणि कार्याणि शास्त्रे प्र-

वर्तन्त इत्यादिषु एकैकस्मिन् सूत्रेऽपि शास्त्रशब्दं प्रायुङ्क्त । श्रीमद्व्यासमुनयोऽपि 'ओं तत्सदिति भगवद्गीतासूपनिषत्सु ब्रह्मविद्याय योगशास्त्रे' इति उदेरिरत । याज्ञवल्क्यमहर्षिरपि 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम्' इति धर्मार्थशास्त्रयोः शास्त्रशब्दमभाणीत् । 'कलाशास्त्रेभ्यः कलातत्त्वस्य संवित् कामशास्त्रतः कामोपचारस्य' इति वामनः चतुःषष्टिकलासु वात्स्यायनप्रोक्तकामशास्त्रेऽपि शास्त्रशब्दं व्याहार्षीत् । जैमिनिमहर्षयोऽपि शास्त्रदृष्टविरोधाच्च तदर्थशास्त्रेत्यादिषु विधिवाक्येषु शास्त्रशब्दमभाणिषुः । काव्यप्रकाशकाररसगङ्गाधरकारादयः अलङ्कारोपपादकग्रन्थेषु शास्त्रपदमवादिषुः । तदेवं बहुषु महाग्रन्थेषु तत्र तत्र समुदाये अवयवेष्वपि ग्रन्थकाराः व्यवजह्रुरिति स्वयमपि सूत्रे भाष्ये च शास्त्रशब्दं मूलकारो व्यवाहार्षीत् । सत्स्वेव ग्रन्थजातेषु प्रायेण बहुलं व्यवहारः । कस्मात् कारणात् क्रियत इति कोविदाः प्रष्टव्या इत्यलं बहुना । प्रकृतमनुसरामः । प्रकटय प्रकाशय । इति तं शंकराचार्यमुवाच । अस्य वेदव्यासस्य आशिषा आङ्पूर्वकशासेः क्विप् । मुदितः संतुष्टः । योगी शंकराचार्यः त्वद्दर्शनात् त्वत्कर्तृकाद्दर्शनात् अवलोकनात् । इदं भाष्यं शारीरकमीमांसाभाष्यम् 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्यादिः 'अनावृत्तिः शब्दात् इति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति' इत्यन्तं भाष्यं भाषितुमर्हम् 'अर्हे कृत्यतृचश्च' इति विहितः कृत्याधिकारपठितः 'ऋहलोर्ण्यत्' इति ण्यत् । भुवि भूमण्डले जयतु सर्वोत्कर्षेण वर्ततामिति निजगाद

निगदितवान् । यद्यपि यजुर्निगदाधिकरणे निगदशब्दार्थनिर्वचनप्रघट्टके निगदशब्दस्य परसंबोधनार्थतां जैमिनीयाः अवगमयामासुः तथापि 'निजगाद सा यदुनन्दनः' इति जयदेवादिकाव्यादिषु उक्तिमात्र एव प्रयुक्तमिति ग्रन्थकारः स्वयमपि भाषणमात्रार्थतया प्रायुङ्क्तेति मन्तव्यम् । **काव्यलिङ्गालंकारः** । हर्षाख्यो भावः औत्सुक्यं च व्यासाशीर्वादमुदितत्वं स्वकीयमहाभीष्टसंप्रार्थने हेतुरिति **कारणालंकारध्वनिः** । मुदितो योगीत्यत्र **परिकरालंकारः** । एतदीयसुचरित्रश्रवणलब्धसंतोषवेदव्यासकर्तृकस्वयमागमनपूर्वकलोकोन्नताशीर्वादप्रदानसंतोषकारणतपोमहिमातिशयपुण्यविशेषसूचकवर्णनवैभवात् **अत्युक्त्यलंकारः** । नवीनभाष्यकरणमात्रेण अत्युक्तमाशीर्वाददानस्योक्तत्वात् हेतुप्रसक्तिजातिशयोक्तिः । आशीर्वाददानजयसंप्रार्थनयोः अनुरूपयोरेव वर्णनात् **समालंकारः** ॥

**संप्रार्थयन्मुनिरमुष्य पदे ववन्दे**
**सोऽपि प्रहर्षितहृदन्तरधान्मुनीन्द्रः ।**
**शिष्येभ्य एव तदनन्तरमात्तहर्षो**
**भाष्यार्थबोधनपरायण एव रेजे ॥ ३७ ॥**

**संप्रार्थयन्निति** । मुनिः आचार्यः । संप्रार्थयन् उक्तप्रकारं याचमानः । अमुष्य वेदव्यसस्य पदे चरणौ ववन्दे वन्दनं कृतवान् । प्रहर्षितहृत् संतोषितहृदयः स मुनीन्द्रः वेदव्यासोऽपि । अन्तरधात् अन्तर्हितवान् । दधातेर्लुङ् । 'गातिस्था' इति सिचो लुक् । तदनन्तरं व्यासान्तर्धानानन्तरम् आत्तहर्षः उपात्तसंतोषः एषः शंकराचार्यः

शिष्येभ्यः भाष्यार्थबोधनपरायणः भाष्यस्य स्वकृतभाष्यस्य अर्थानां बोधने अवगमने परायणः तत्पर एव। रेजे बभौ। 'राजृ दीप्तौ' इत्यस्माल्लिट् ॥ ३७ ॥

कश्चिद्वटुः समुपगम्य गुरोः पदाब्ज-
युग्मं प्रणम्य निजगाद निजानुदन्तान् ।
चोले जनिर्जनपदे मम देशिकेन्द्र
त्वां तारकं शरणमेमि समुद्धरेति ॥ ३८ ॥

कश्चिदिति। कश्चिद्वटुः माणवकः। समुपगम्य समीपं प्राप्य। गुरोः पदाब्जयुग्मम् प्रणम्य। हे देशिकेन्द्र गुरुराज, मम जनिः जननम्, चोले चोलाख्ये जनपदे। तारकम् उद्धारकम् अर्थात्संसारगरादिति संबध्यते। त्वां शरणं रक्षितारम् 'शरणं गृहरक्षित्रोः' इत्यमरः। एमि उपैमि। समुद्धर उद्धारय। मामिति शेषः। इति निजान् स्वकीयान् उदन्तान् वृत्तान्तान् 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः। निजगाद उवाच ॥ ३८ ॥

आवेदितः स च तमर्हगुणान्विचार्य
संन्यासमापिपददत्त सनन्दनाख्याम् ॥
वैराग्यमस्य सुदृढं समवेक्ष्य सूत्र-
भाष्यं तथोपनिषदस्त्रिरपीपठच्च ॥ ३९ ॥

आवेदित इति। आवेदितः पूर्वोक्तप्रकारेण संप्रार्थितः। स च शंकराचार्योऽपि। तं वटुम् अर्हगुणान् शमदमादीन्। विचार्य। सं-

न्यासं तुर्याश्रमम् । आपिपत् प्रापयामास । आप्नोतेर्णिजन्ताल्लुङ् । 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङ् 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावः । 'सन्यत' इतीत्वम् । तथा सनन्दनाख्यां सनन्दन इति नाम अदत्त दत्तवान् । 'डुदाङ्दाने' इत्यस्माल्लङ्यात्मनेपदम् । अस्य सनन्दनाचार्यस्य सुदृढं वैराग्यं समवेक्ष्य । भाष्यं स्वकृतब्रह्मसूत्रभाष्यं उपनिषदः छान्दोग्यबृहदारण्यकाद्याश्च त्रिः त्रिवारम् 'द्वित्रिचतुर्भ्यः सुच्' इति सुच् । अपीपठत् पाठितवान् 'पठ व्यक्तायां वाचि' इत्यस्मात् पूर्ववल्लुङ् 'दीर्घो लघोः' इत्यभ्यासदीर्घः । शिष्योपस्थितिप्रदपाठनावृत्त्या वात्सल्यातिशयः सूचितः ॥ ३९ ॥

संप्रीतिमान्प्रथमतोऽस्त्ययमेव योगी-
तीर्ष्यां वितेनुरितरे समवेतशिष्याः ।
विज्ञाय तां परतटे स गुरुर्द्युनद्या-
स्तिष्ठन्सनन्दनमथान्तिकमाजुहाव ॥ ४० ॥

संप्रीतिमानिति । इतरे अन्ये । समवेतशिष्याः समवेताः संबद्धाः संभूय ईर्ष्याकर्तार इति भावः । ते च ते शिष्याश्च अयमेव योगी सनन्दनाचार्यः । प्रथमतः आदितः । संप्रीतिमान् संप्रीतिः अस्मिन्नस्तीति संप्रीतिमान् । प्रकरणाद्गुराविति संबध्यते । अस्ति विद्यते इति इत्थं ईर्ष्यां असूयां वितेनुः चक्रुः । विपूर्वात्तनोतेर्लिट् । 'कृतो करोत्यावहति विदधात्यादधाति च । वितनोत्यात्मने पञ्च' इत्याख्यातचन्द्रिका । अथ अनन्तरं स गुरुः शंकराचार्यः तां शिष्यैः

क्रियमाणाम् ईर्ष्यां विज्ञाय विदित्वा । द्युनद्याः गङ्गायाः परतटे परतीरे तिष्ठन् सन् । सनन्दनं सनन्दनाचार्यम् अन्तिकं समीपं स्वस्येति शेषः । आजुहाव आकारयामास । आङ्पूर्वात् 'ह्वेञ् स्पर्धायां शब्दे च' इत्यस्मात् लिट् । 'अभ्यस्तस्य च' इति संप्रसारणम् ॥ ४० ॥

संसारसिन्धुमपि तारयितुः समीपं
गन्तारमेव तटिनी किमु मां रुणद्धि ।
इत्याकलय्य दृढमाशु जगाम नद्यां
पद्मान्युपानयदथानुपदं च सास्य ॥ ४१ ॥

संसारेति । संसारसिन्धुमपि भवसमुद्रमपि, अपिशब्देन संसारसमुद्रस्य सुतरां दुस्तरत्वं द्योत्यते ; तारयितुः निस्तारयितुः गुरोः समीपं गन्तारमेव मां तटिनी नदी रुणद्धि निरोधं करोति किमु. न किमपीत्यर्थः । 'रुधिर् आवरणे' इत्यस्माल्लट् । इति दृढम् आकलय्य नद्याम् आशु शीघ्रम् जगाम । सा गङ्गा अस्य सनन्दनाचार्यस्य अनुपदं पदं पदं अनु पद्मानि कमलानि उपानयत् उप समीपे आनयत् आनीतवती । काव्यार्थापत्त्यलंकारः । ईदृशी साहसप्रवृत्तिः गुरौ भक्तिविशेषं सूचयति । तथा च भक्तिसूत्रम् 'सन्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात्' इति । अत्र सन्मानादिषु दशसु दिक्षु प्रकृते अप्रातिकूल्यं तद्भक्तिचिह्नं ज्ञेयम् ॥

ह्रीणा बभूवुरितरे तमवेक्ष्य चित्तं
प्रेम्णो गुरोरुचितमेव च मेनिरे तम् ।

तद्भक्तिभासनकरो जय पद्मपादा-
चार्येति नाम स गुरुस्तदनु व्यतानीत् ॥

ह्रीणा इति । इतरे शिष्याः । तत् चित्रम् आश्चर्यम् । पद्मे पद्मे पदं निधाय नद्यन्तर्गमनरूपम् अवेक्ष्य आलोक्य । ह्रीणाः लज्जिताः बभूवुः । गुरोः शंकराचार्यस्य प्रेम्णः स्नेहस्य । तं सनन्दनाचार्यम् । उचितमेव अनुरूपमेव । मेनिरे ज्ञातवन्तः । तदनु साहसप्रदर्शनानन्तरं स गुरुः शंकराचार्यः तद्भक्तिभासनकरः सन् तस्य शिष्यस्य भक्तेः 'अथातो भक्तिजिज्ञासा' 'सा परानुरक्तिरीश्वरे' इति लक्षितायाः भासनकरः प्रकाशनकरः सन् । हे पद्मपादाचार्य त्वं जयेति नाम व्यतानीत् । विपूर्वात्तनोतेर्लुङ् । पद्मे पादो यस्येति व्युत्पत्तिः ॥

शिष्यान्समस्तविषयेष्वथ संग्रहीता
संप्राप सैष निगमप्रथितां त्रिवेणीम् ।
सस्नौ सशिष्यनिवहोऽपि च तत्र तीरे
ऽपश्यत्तुषाग्निशयितं किल भट्टपादम् ॥ ४३ ॥

शिष्यानिति । अथ अनन्तरम् । समस्तविषयेषु समस्तदेशेषु 'नीवृतजनपदौ देशविषयौ' इत्यमरः । शिष्यान् छात्रान् संग्रहीता संग्रहणशीलः । ताच्छील्ये तृन् । 'न लोक' इति षष्ठीनिषेधः । स एष शंकराचार्यः 'सोऽचिलोपे चेत्पादपूरणम्' इति सोर्लोपः । निगमप्रथितां वेदप्रसिद्धाम् । त्रिवेणीम् । संप्राप प्राप्तवान् संपूर्वादाप्नोतेर्लिट् । अपि च तत्र नद्याम् । स शिष्यनिवहः शिष्यनि-

यहेन सहितः 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। सस्नौ स्नातवान्। ष्णाशौचे' इत्यस्माल्लिट्। तीरे तटे तस्या इति शेषः। तुषाग्निशयितं तुषाग्नौ धान्यत्वगग्नौ शयितं सुतं भट्टपादं कुमारिलभट्टाचार्यम्। पादशब्दः पूज्यार्थकः। अपश्यत्किल दृष्टवान्। दृशेर्लङ्। सौगतेषु तन्मतपरिज्ञानाय अधीत्य तन्मतनिरसनायैव प्रवृत्तमिति संप्राप्तेन गुरुद्रोहेण तुषाग्निना देहविसर्जनं तत्प्रायश्चित्तमिति तत्कुर्वाणः तस्थाविति शंकरविजयादौ प्रसिद्धम्॥ ४३॥

तस्मा अदर्शयदयं स्वकसूत्रभाष्यं
दृष्ट्वा स तुष्टहृदयो मधुरं तमूचे।
स्वस्थोऽभविष्यमथ चेत्तव भाष्यमेत-
द्द्राग्व्याकरिष्यामि तत्सुकृतं न मेऽस्ति॥

तस्मा इति। अयं शंकराचार्यः। तस्मै भट्टाचार्याय। स्वकसूत्रभाष्यं स्वकं च तत् सूत्रभाष्यं च तथोक्तम्। अदर्शयत् दर्शितवान्। स भट्टाचार्यः। दृष्ट्वा अर्थाद्भाष्यमिति संबध्यते। तुष्टहृदयः सन् संतुष्टमनाः सन्। तं शंकराचार्यम्। मधुरं मनोहरं यथा स्यात्तथा। ऊचे बभाषे। अहं चेत् स्वस्थः स्वास्थ्यवान्। अभविष्यम्। अथ अनन्तरम्। तव। एतद्भाष्यम्। द्राक् शीघ्रम्। व्याकरिष्यमपि व्याख्यास्ये च। मे तत्सुकृतं नास्ति॥ ४४॥

शिष्यो ममास्ति मगधेषु स विश्वरूपा
भूमौ प्रसिद्धसुगुणोऽखिलशास्त्रवेत्ता।

तस्याङ्गना वसति चोभयभारतीति
प्रौढा कलासु सकलासु सरस्वती प्राक् ॥

शिष्य इति । भूमौ । प्रसिद्धसुगुणः प्रसिद्धाः सुगुणाः यस्य स तथोक्तः । अखिलशास्त्रवेत्ता समस्तशास्त्राभिज्ञः । विश्वरूपः विश्वरूपाभिधानः । मम स शिष्यः । मगधेषु मगधदेशेषु । अस्ति । तस्य विश्वरूपविदुषः । अङ्गना वधूः उभयभारतीत्येतदभिधाना । वसति च । सकलासु समस्तासु । कलासु विद्यासु । प्रौढा प्रगल्भा । सा उभयभारती । प्राक् पूर्वम् । सरस्वती अभूदिति शेषः ॥ ४५ ॥

आम्नायविस्वरपदश्रवणात्तहास्या
दुर्वाससा नृजनिशापवती विशापे ।
मानुष्यशंकरसुदृष्ट्यवधिं गृहीत्वा
जाता वधूर्वसति तस्य च तत्र याहि ॥ ४६ ॥

आम्नायेति । आम्नायविस्वरपदश्रवणात्तहास्या आम्नायस्य वेदस्य विस्वरस्य विगुणस्वरस्य पदस्य श्रवणेन आत्तं प्राप्तं हास्यं यया सा तथोक्ता । दुर्वाससा दुर्वासऋषिणा । नृजनिशापवती नृजनिः मनुष्यजन्म तद्रूपशापः अस्या अस्तीति नृजनिशापवती । विशापे शापविगमे । मानुष्यशंकरसुदृष्ट्यवधिं मनुष्य एव मानुष्यः स चासौ शंकरश्च तस्य सुदृष्टिः दर्शनमेव अवधिः शापावधिः तम् । गृहीत्वा आदाय । तस्य विश्वरूपस्य । वधूः पत्नी । जाता सती वसति आस्ते । त्वं तत्र याहि गच्छ । पुरा किल ब्रह्मणः समीपे सामवेदाध्ययनकाले विस्वरपठितारं दुर्वाससमृषिं दृष्ट्वा

कृतहास्या सरस्वती भूलोके मानुषी भवेति क्रोधात्तेन शप्ता पुनः शापमोक्षकालं संप्रार्थ्य मानुषशंकरदर्शनात् शापपरिहार इति ततः लब्धप्रसादा विश्वरूपाचार्यस्य पत्नी बभूवेति शंकराभ्युदयादौ प्रसिद्धम् ॥ ४६ ॥

वश्यं करोषि यदि तं कथमप्युपायै-
स्त्वद्भाष्यवार्तिकमसौ रचयेत्कृतीति।
वाक्यं तदीयमनुमत्य ततः प्रयान्तं
योगीन्द्रमैक्षत स मण्डनमिश्रविद्वान् ॥ ४७ ॥

वश्यमिति। तं विश्वरूपम्। उपायैः युक्तिभिः। कथमपि केनापि प्रकारेण। वश्यम् अधीनम्। यदि करोषि तदा कृती विद्वान् असौ विश्वरूपाचार्यः त्वद्भाष्यवार्तिकं त्वदीयभाष्यस्य वार्तिकम् 'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः' इति पराशरोपपुराणोक्तलक्षणलक्षितं ग्रन्थम्। रचयेत् कुर्यात् इति तमूचे इति पूर्वेणान्वयः। ततः तस्मात्स्थानात् तदीयं वाक्यम्। अनुमत्य अङ्गीकृत्य। प्रयान्तम्। योगिन्द्रं शंकराचार्यम्। सः प्रसिद्धः मण्डनमिश्रविद्वान्। ऐक्षत अपश्यत्। ईक्षतेर्लङ् ॥

भट्टान्तिके त्रिगुणवर्धितसप्तवारं
योऽयं पपाठ वरजैमिनिसूत्रभाष्यम्।
साष्टाङ्गमाशु मुनिराजममुं प्रणम्य
प्रोचे स चारुवचनं विनयेन वाग्मी ॥ ४८ ॥

**भट्टान्तिक इति।** भट्टान्तिके भट्टाचार्यसमीपे। योऽयं मण्डनमिश्रविद्वान्। वरजैमिनिसूत्रभाष्यं वरम् उत्तमं जैमिनेः सूत्रं द्वादशाध्यायी पूर्वमीमांसासूत्रं तस्य भाष्यं शाबरभाष्यम्। त्रिगुणवर्धितसप्तवारं त्रयो गुणा आवृत्तयः तैः वर्धिताः अभिवर्धिताः सप्त वाराः सप्तावृत्तयो यस्मिन् कर्मणि तद्यथा स्यात्तथा। पपाठ पठितवान्। वाग्मी सः। मुनिराजं शंकराचार्यम्। आशु। साष्टाङ्गम् अष्टभिरङ्गैः सह प्रणम्य। विनयेन चारुवचनं वाक्यम् प्रोचे॥

**योगीन्द्र तावकपदे समवेक्ष्य सद्यो**
**धन्योऽस्मि मामनुगृहाण सहैव नेतुम्।**
**उद्धारयाशु भववारिनिधेर्मुदा मा-**
**मेवं वदन्तमवदन्मुनिराड्दयालुः॥ ४९॥**

**योगीन्द्रेति।** हे योगीन्द्र। तावकपदे तावके च ते पदे च चरणे च ते समवेक्ष्य समवलोक्य। सद्यः धन्यः कृतार्थः अस्मि भवामि। मां सहैव नेतुम्। अनुगृहाण अनुग्रहं कुरु। 'ग्रह उपादाने' इत्यस्माल्लोटि हौ। 'हलः श्नः शानज्झौ' इति शानजादेशः। मुदा संतोषेण। भववारिनिधेः संसारसमुद्रात् आशु माम् उद्धारय। एवम् अनेन प्रकारेण वदन्तं मण्डनमिश्रं प्रति दयालुः 'दयं दानगतिरक्षणहिंसादानेषु' इत्यस्मात् 'स्पृहि गृहि' इत्यादिना आलुच्प्रत्ययः। मुनिराट् मुनिराजः। अवदत् अब्रवीत्॥ ४९॥

**संशुद्धचित्त सुकृतैर्निजतत्त्वबोधा-**
**त्सौख्यं परं कलय शीघ्रमिति प्रमोदात्।**

आश्वास्य तं च मगधं गतवान्ददर्श
तं विश्वरूपगृहिणं विबुधाग्रगण्यम् ॥ ५० ॥

संशुद्धेति । सुकृतैः सुकर्मभिः । संशुद्धचित्त संशुद्धहृदय । निजतत्त्वबोधात् निजम् आत्मीयं तत्त्वं स्वरूपं तस्य बोधात् ज्ञानात् आत्मसाक्षात्कारात् । परम् उत्कृष्टम् । मोक्षरूपं सौख्यं सुखमेव सौख्यम् । स्वार्थे ष्यञ् । शीघ्रं कलय प्राप्नुहि इति प्रमोदात् संतोषात् । तम् आश्वास्य स शंकराचार्यः । मगध मगधाख्यदेशम् । गतवान् । विबुधाग्रगण्यं बुधानाम् अग्रगण्यं गणनीयम् । विश्वरूपगृहिणं विश्वरूपश्चासौ गृही च तम् । ददर्श ॥ ५० ॥

आतिथ्यमातनुत सर्वमथैष तस्मै
भिक्षार्थमाश्रयत तं परिवेष्य भोज्यम् ।
हस्तेऽस्य नीरमदितोभयभारती सा
नासौ पपौ न च मुमोच तथैव तस्थौ ॥५१॥

आतिथ्यमिति । अथ अनन्तरम् । एषः विश्वरूपगृही । तस्मै आचार्याय सर्वं समस्तम् । आतिथ्यम् अतिथये इदम् आतिथ्यम् 'तादर्थ्ये अतिथेर्ञ्यः' इति ञ्यः । क्रियमाणं पाद्यार्घ्यादिकम् । आतनुत अकरोत् । आङ्पूर्वात्तनोतेर्लङ् । तं मुनिराजम् । भिक्षार्थं भोज्यं भोक्तुमर्हम् । परिवेष्य परिवेषणं कृत्वा आसयत् उपावेशयत् । अस्य आचार्यस्य । हस्ते । सा विश्वरूपगृहिणः पत्नी । नीरम् उदकम् । अदित दत्तवती । 'डुदाञ् दाने' इत्यस्माल्लुङ् आत्मने-

पदम्। असौ आचार्यः। उदकं न पपौ। 'पा पाने' लिट्। न मुमोच च 'मुच्लृ मोक्षणे'। तथैव तस्थौ स्थितवान्। 'ष्ठा गतिनिवृत्तौ' ॥ ५१ ॥

किं कारणं न्विति विशङ्कितविश्वरूपः
पप्रच्छ तं यदि करोषि मयाथ वादम्।
सम्यग्जयावधि तदेव समाददीय
हस्ताम्भ इत्युदित आशु तदभ्युपागात् ॥५२॥

किमिति। हस्तोदकस्याग्रहणे किं कारणम्। नु इति वितर्के। इति विशङ्कितो विशेषेण शङ्कां कर्ता मयि वा अस्यां वा दोषं परिज्ञाय हस्तोदकं न गृह्णातीति शङ्कमानः विश्वरूपः तं पप्रच्छ पृष्टवान्। अथ अनन्तरम्। मया सह यदि त्वं सम्यक् जयावधि सम्यग्जयः अवधिः यस्मिन् कर्मणि तद्यथा स्यात्तथा। वादं करोषि। तदेव हस्ताम्भः हस्तोदकम्। समाददीय गृह्णीयाम् इति उदितः उक्तः 'उक्तं भाषितमुदितम्' इत्यमरः। अमुनेति शेषः। आशु तद्वचनं अभ्युपागात् अङ्गीकृतवान्। अभ्युपपूर्वादिणो लुङ् ॥ ५२ ॥

जेत्राश्रमाभ्युपगमे पणबन्धभाजौ
साक्ष्ये विधाय वनितां च गिरोऽवतारम्।
आरभ्य भुक्तिसमनन्तरकालमेव
मीमांसयोरकुरुतां विबुधौ विवादम् ॥ ५३ ॥

जेत्राश्रम इति। जेतुः आश्रमस्य अभ्युपगमे यद्यहं जितः

-स्यां तर्हि यतिर्भवेयम्, तथैव गृहीति च पणबन्धभाजौ पणः द्यूतं स एव बन्धः कार्यान्तरकरणाभावात् तं भजेते इति पणबन्धभाजौ। गिरः सरस्वत्याः अवतारं धृतमनुष्यदेहां वनिताम् उभयभारतीं च साक्ष्ये साक्षित्वे 'साक्षाद्द्रष्टरि संज्ञायाम्' इति इनौ साक्षिण्या भावः साक्ष्यमिति ष्यञि पुंवद्भावः। विधाय कृत्वा भुक्तिसमनन्तरकालमेव भोजनानन्तरकालमेव। 'कालाध्वनोः' इति द्वितीया। आरभ्य उपक्रम्य। विबुधौ कोविदौ शंकराचार्यविश्वरूपाचार्यौ। विवादम् अकुरुतां कृतवन्तौ ॥ ५३ ॥

एवं दिनेष्वतिगतेष्वथ सप्तमेऽह्नि
भिक्षां विधत्तमिति तौ सममाह्वयत्सा।
अन्तर्दधे यतिवरात्मकशंकरस्य
संदर्शनेन परिमुक्तमुनीन्द्रशापा ॥ ५४ ॥

एवमिति। एवंप्रकारेण। दिनेषु अतिगतेषु अतीतेषु सत्सु। अथ अनन्तरम्। सप्तमेऽह्नि सप्तमे दिवसे युवां भिक्षां विधत्तं कुरुतम् इति तौ शंकराचार्यविश्वरूपाचार्यौ प्रति समं समानतया आह्वयत् आकारयत्, आहूतवतीत्यर्थः। प्राक्तनदिनषट्केऽपि भर्तारं वैश्वदेवाय यतिराजं च भिक्षायै इति पृथक् पृथगाकारणशीला सप्तमेऽह्नि भर्तुः पराजयं ज्ञात्वा तस्य च संन्यासं मनसि सिद्धवत्कृत्य उभावप्येकरूपेणाकारितवतीति भावः। सा उभयभारती यतिवरात्मकशंकरस्य यतिवरः आत्मा यस्य तथाविधः शंकरः ईश्वरः तस्य संदर्शनेन अवलोकनेन प्रागुक्तरीत्या

परिमुक्तमुनीन्द्रशापा सती परिमुक्तः परित्यक्तः मुनीन्द्रस्य दुर्वास-महर्षेः शापः यया सा तथोक्ता। स्वयम् अन्तर्दधे अन्तर्हितवती ॥

संन्यासमादित जितः कलितोपदेशो
विद्वानमुष्य चरणं शरणं प्रपेदे।
तत्तादृशं सततकर्मपरं मनोऽस्य
ब्रह्मैकगामि नवनीतमिवाज्यमासीत् ॥ ५५ ॥

संन्यासमिति। विद्वान् विश्वरूपाचार्यः। जितः सन् वादे पराभूतः। कलितोपदेशः कलितः अङ्गीकृतः उपदेशः येन स तथोक्तः सन्। संन्यासं तुरीयाश्रमं आदित गृहीतवान्। अमुष्य गुरोः चरणं पदं शरणं रक्षितृ प्रपेदे प्राप्तवान्। अस्य विश्वरूपाचार्यस्य सततकर्मपरं सततं सदा कर्मपरं कर्मतत्परं तत्तादृशं तथाभूतं नवनीतम् आज्यमिव। आसीत् अभूत्। उपमालंकारः ॥ ५५ ॥

भाष्यादिकाखिलकृतीरपि पाठयित्वा
वेदान्तशास्त्रपरिनिष्ठितमातनोत्तम्।
श्रीतैत्तिरीयमुनिसूत्रगभाष्ययुग्मे
त्वं वार्त्तिके कुरु सुधीरिति चान्वजानात् ॥ ५६ ॥

भाष्येति। भाष्यादिकाखिलकृतीरपि पाठयित्वा तं विश्वरूपं वेदान्तशास्त्रपरिनिष्ठितं वेदान्तशास्त्रे उपनिषत्प्रतिपादकब्रह्मसूत्रशास्त्रभाष्यादिग्रन्थेषु परिनिष्ठितं परितो निष्ठा निश्चयः अस्य संजाता स परिनिष्ठितः तथाविधम् आतनोत् कृतवान्। हे सुधीः सुबुद्धिमन्

त्वं श्रीतैत्तिरीयमुनिसूत्रगभाष्ययुग्मे श्रीयुक्तं तैत्तिरीयं तैत्तिरीयोपनिषत् मुनिसूत्रं ब्रह्मसूत्रं च तयोर्भाष्ययुग्मे भाष्ययोः वार्त्तिके वार्त्तिकद्वयं कुरु । इति अन्वजानात् अनुज्ञातवान् । अनुपूर्वाज्जानातेर्लङ् । सुधीरित्यत्र परिकराङ्कुरः ॥ ५६ ॥

पूर्वाश्रमे विमतभिक्षुगणः स कार्मो
व्यासस्य जैमिनिरिवेतरथास्ति शिष्यः ।
किं न्वेष वार्त्तिकयुगं विदधीत साध्वि-
त्यन्येऽभिधाय गुरवे यतयो विजघ्नुः ॥ ५७ ॥

पूर्वाश्रम इति । स शिष्यः विश्वरूपाचार्यः पूर्वाश्रमे गृहस्थाश्रमे विमतभिक्षुगणः विमतः अनभिमतः भिक्षुगणः संन्यासिनिकरः येन स तथोक्तः कार्मः कर्मशीलः । 'कार्मस्ताच्छील्ये' इति सूत्रेण निपातितः । व्यासस्य ब्रह्मजिज्ञासासूत्रकृतः धर्मजिज्ञासासूत्रकृज्जैमिनिरिव इतरथा अन्येन प्रकारेण अस्ति विद्यते । एष वार्त्तिकयुगं साधु सुष्ठु विदधीत । किं नु इति वितर्के । इति अन्ये यतयः गुरवे अभिधाय विजघ्नुः विघ्नं चक्रुः । विपूर्वात् 'हन हिंसागत्योः' इत्यस्माल्लिट् ॥ ५७ ॥

तस्मै ततो हृदयरीतिपरीक्षणाय
ग्रन्थान्तरं रचयितुं दददभ्यनुज्ञाम् ।
टीकामकारयत साधु सनन्दनेन
भाष्यस्य तां सह च तैरशृणोद्यतीन्द्रः ॥

तस्मा इति । यतीन्द्रः शंकराचार्यः ततः तदनन्तरं हृदयरीति-परीक्षणाय हृदयस्य रीतेः परीक्षणाय परीक्षायै ग्रन्थान्तरम् अन्यं ग्रन्थं रचयितुं कर्तुं अभ्यनुज्ञां नियोगं ददत् प्रयच्छन् सनन्दनेन सनन्द-नाचार्येण भाष्यस्य ब्रह्मसूत्रभाष्यस्य टीकां टिप्पणीं साधु अकारयत व्यधापयत । तां टीकां तैः शिष्यैश्च सह अशृणोत् श्रुतवान् । 'श्रु श्रवणे' इत्यस्माल्लङ् ॥ ५८ ॥

नैष्कर्म्यसिद्धिकृतिमाशु विधाय सोऽपि
ब्रह्मैक्यबोधनपरां गुरवे निवेद्य ।
ते वार्त्तिके अपि समर्प्य सुरेश्वरार्य-
संज्ञां प्रहर्षितगुरोः कृपया स लेभे ॥ ५९ ॥

नैष्कर्म्यसिद्धिमिति । सोऽपि विश्वरूपाचार्योऽपि ब्रह्मैक्य-बोधनपरां ब्रह्माद्वैतबोधिनीं नैष्कर्म्यसिद्धिकृतिं एतदाख्यां कृतिं ग्रन्थं विधाय विरच्य गुरवे निवेद्य ते वार्त्तिके अपि तैत्तिरीयभाष्यब्रह्म-सूत्रभाष्ययोः वार्त्तिके अपि द्विवचनान्तत्वेन प्रगृह्यत्वात्प्रकृतिभावः । समर्प्य अर्पयित्वा प्रहर्षितगुरोः प्रहर्षितस्य गुरोः शंकराचार्यस्य कृपया सुरेश्वराचार्यसंज्ञां सुराणामीश्वरः सुरेश्वरः तस्याचार्यो बृहस्पतिः तत्सदृशं बुद्धिमत्त्वं दृष्ट्वा वात्सल्येन गुरुदत्तां संज्ञां नाम लेभे लब्धवान् ॥ ५९ ॥

त्वद्वार्त्तिकं प्रथनमेष्यति तस्य टीका
मंक्ष्यत्यथाध्यवनि वत्स्यति पञ्चपादी ।

कालादितीरितगिरं गुरुमत्र पूर्तौ
संप्रार्थनेन सुमतिः समतोषयत्सः ॥ ६० ॥

त्वदिति । हे सुरेश्वराचार्य त्वद्वार्त्तिकं तव वार्त्तिकं प्रथनं प्रख्यातिम् एष्यति गमिष्यति । तस्य पद्मपादाचार्यस्य टीका भाष्यटिप्पणी मंक्ष्यति मग्ना भविष्यति । अथ अनन्तरम् अध्यवनि अवनौ विभक्त्यर्थेऽव्ययीभावः । पञ्चपादी पञ्चानां पादानां समाहारः पञ्चपादी। 'तद्धितार्थोत्तरपद–' इति विहिते समासे द्विगुसंज्ञायाम् 'द्विगोः' इति ङीप्। कालात् कालगुणात् वत्स्यति स्थास्यति। 'इण्गतौ' 'टुमस्जो शुद्धौ' 'वस निवासे' एभ्यो लृट्। इतीरितगिरम् ईरिता उक्ता गीर्वाग्येन स तथोक्तस्तं गुरुं शंकराचार्यं सुमतिः सुष्ठु बुद्धिमान् सः सुरेश्वराचार्यः अत्र भाष्ये टीकाग्रन्थे पूर्तौ पूर्णताविषये संप्रार्थनेन तदीयटीकापि पूर्णा भवतु इत्यसूयां त्यक्त्वा प्रार्थनेन समतोषयत् समहर्षयत् 'तुष तुष्टौ' इत्यस्मात् 'हेतुमति च' इति णिच् ॥ ६० ॥

ऋक्षैरिवामृतकरः सहितः सुशिष्यै
रेवामुपेत्य रुचिरां सुचिरं न्यवात्सीत् ।
अत्रान्तरेऽस्य जरती जननी तनूजं
सस्मार चातुरतया किल दत्तवाचम् ॥६१॥

ऋक्षैरिति। ऋक्षैः नक्षत्रैः अमृतकरश्चन्द्र इव सुशिष्यैः सहितः स शंकराचार्यः रुचिरां मनोहरां रेवां नर्मदामुपेत्य उपगम्य चिरात् बहुकालं न्यवात्सीत् निवासं कृतवान् । अत्रान्तरे अस्मिन्नवसरे

अस्य जरती वृद्धा जननी माता दत्तवाचम् 'अम्ब स्मरिष्यसि यदा तु तदा समीप एवास्मि' इति दत्ता वाक् येन सः तथोक्तं तं तनूजं पुत्रं शंकराचार्यं आतुरतया निधनातुरतया सस्मार किल चिन्तयामास। 'स्मृ आध्याने' इत्यस्माल्लिट्॥ ६१॥

विज्ञाय तल्लघु निवास्य समस्तशिष्या-
न्योगात्सवेगमथ जन्मभुवं जगाम।
स्वीयाननेक्षणजहर्षहृतव्यथाया-
स्तस्या पदाम्बुजयुगं विनयान्ननाम॥ ६२॥

विज्ञायेति। अथ अनन्तरं तत् तदीयस्मरणं योगात् योगजलक्षणप्रत्यासत्तेः। तथा च योगसूत्रम्—'सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थसंयमात् पुरुषज्ञानम्। ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते। ते समाधावुपसर्गा व्युत्थाने सिद्धयः' इति। लघु द्रुतं विज्ञाय ज्ञात्वा समस्तशिष्यान् तत्रैव निवास्य जन्मभुवं कारटिग्रामं सवेगं वेगेन सह यथा स्यात्तथा 'ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः। ततो मनोजवित्वं विकरणभावः प्रधानजयश्च' इत्युक्तात्सिद्धिविशेषात् जगाम प्राप। स्वीयाननेक्षणजहर्षहृतव्यथायाः स्वीयस्य आत्मीयस्याननस्य ईक्षणात् दर्शनात् जायत इति स्वीयाननेक्षणजः, स चासौ हर्षश्च तेन हृता व्यथा यस्याः सा तथोक्तायाः तस्याः मातुः पदाम्बुजयुगं चरणकमलयुग्मं विनयात् आदरात् ननाम नमस्कृतवान्। 'णमु प्रह्वत्वे शब्दे च' इत्यस्माल्लिट्॥ ६२॥

निर्याणसंनिहितकालमवेत्य मातुः
स ब्रह्म निर्गुणमबोधयदात्महृद्यम् ।
शक्तास्मि नाकलयितुं तदुपात्तमूर्ति
ब्रह्म स्तुहीति सुधियाथ सुतस्तयोचे ॥

निर्याणेति । सः शंकराचार्यः मातुर्निर्याणसंनिहितकालं निर्याणस्य निधनस्य संनिहितं संनिकृष्टं कालम् अवेत्य अवगम्य आत्महृद्यं आत्मनः हृद्यम् 'हृदयस्य प्रियः' इति प्रियार्थे यत् । निर्गुणं निर्विशेषं ब्रह्म नित्यशुद्धबुद्धसच्चिदानन्दस्वरूपं परमात्मानम् अबोधयत् बोधितवान् । अथ अनन्तरं तत् निर्गुणब्रह्म आकलयितुं ग्रहीतुं शक्ता क्षमा नास्मि न भवामि । त्वम् उपात्तमूर्ति उपात्ता मूर्तिर्यस्य तत् तथोक्तं ब्रह्म परमात्मानं स्तुहि स्तोत्रं कुरु । 'ष्टुञ् स्तुतौ' इत्यस्मात् लोण्मध्यमपुरुषैकवचनम् । इति सुधिया सुष्ठु धीर्यस्याः सा तया जनन्या सुतः आचार्यः ऊचे उक्तः । कर्मणि लिट् । निर्गुणब्रह्मज्ञानं सर्वेषामपि सुगमतया न भवतीति सूचितम् । तथा च सगुणशिवाद्वैतप्रतिपादकभाष्यानुसारिबहुग्रन्थकर्तृभिरप्पय्यदीक्षितैरानन्दलहर्याम् अन्ते कथिताः श्लोकाः—'शुद्धं ब्रह्माद्वितीयं कथमपि हृदयं नाधिरोहेत्सुसूक्ष्मं तत्र स्थैर्याय बुद्धेस्तनुगुणमहितं तच्चिरं ध्येयमादौ । इत्यार्यैर्भक्तिसिद्ध्यै सगुणमिह परं ब्रह्म नान्यत्ततोऽस्तीत्येवं वेदान्तवाक्यैः सह तदनुगुणं योजितं सूत्रजातम् ॥ १ ॥ नैर्गुण्यादिश्रुतीनां सगुणपरतया योजनं भाक्तमस्तु स्वस्वामित्वार्थपद्याविरचनमफलं तत्त्व-

मस्यादिवाचाम् । जीवस्य ब्रह्मणश्च ह्युदितमभिदयोपासनं सत्यमेतत्स्थूलानां दासमार्गप्रपदनरुचये तेषु वक्तव्यमुक्तम् ॥ २ ॥ कर्मानुष्ठानभूम्ना भवभयहरणी चित्तशुद्धिर्भवेत् स्यादित्यादावादरार्थं खलु परिहरणं मोक्ष्यमाणाश्रमाणाम् । यत्नाद्वेदर्षिवाक्यैस्तदनुगुणनयैः साधितं कल्पसूत्रे तद्वद्भाष्येऽत्र योज्यं गुणबहुमतये दूषणं निर्गुणस्य' इत्यादयः । एषां व्याख्यानलेखनं ग्रन्थविस्तरभयादुपरम्यते । एवं निर्गुणस्वरूपपरिज्ञानाक्षमाणां सगुणोपासनावश्यकता शिवगीतायामप्यभिहिता— 'सगुणोपासनाभिस्तु चित्तैकाग्र्यं विधाय च । स्थूलसौरांभिकान्यायात्तत्र चित्तं प्रवर्तयेत्' इति ॥ ६३ ॥

**कृत्वा तदैव शिवविष्णुभुजंगमुख्य-**
**स्तोत्राण्यशुश्रवदयं प्रणयान्मनीषी ।**
**तत्रोदितं विमलचेतसि चिन्तयन्ती**
**योगीशवद्गतिमविन्दत योगिमाता ॥ ६४ ॥**

कृत्वेति । मनीषी विद्वानयं शंकराचार्यः शिवविष्णुभुजंगमुख्यस्तोत्राणि शिवविष्ण्वोः भुजंगौ भुजंगप्रयातवृत्तकृतस्तोत्रे तन्मुख्यानि तदादीनि च स्तोत्राणि तथोक्तानि तदैव तस्मिन्काल एव कृत्वा अशुश्रवत् श्रावितवान् । 'श्रु श्रवणे' इत्यस्माण्णिजन्तात् 'णिश्रि–' इत्यादिना चङि 'श्रवतिशृणोति–' इत्यादिना अभ्यासोकारस्येत्वविकल्पः । योगिमाता आचार्यजननी तत्र स्तोत्रेषु उदितम् उक्तं देवं विमलचेतसि निर्मलचित्ते । सत्पुत्रयोगीन्द्रसांनिध्यात् खेदोद्दीपकाभावाच्च चित्तनैर्मल्यं ज्ञेयम् । चिन्तयन्ती सती योगीशवत् योगी-

शेन तुल्यं गतिम् अर्चिरादिमार्गेण अविन्दत प्राप्तवती । 'विद्लृ लाभे' इत्यस्माल्लङात्मनेपदम् । अर्चिरादिमार्गस्तु च्छान्दोग्योपनिषदि— तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासान् षाण्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति' इति 'अर्चिरादिना तत्प्रथितेः' इत्यादिवेदान्तसूत्रेषु च स्पष्टः ॥ ६५ ॥

बुद्ध्वापि बन्धुजनता न तदोक आगु-
र्नाग्निं ददुः परममुं च खला निनिन्दुः ।
प्रोक्षन्कमण्डलुजलैश्चलयञ्शवं च
दक्षात्करादुपचिताग्निरमुं ददाह ॥ ६५ ॥

बुद्ध्वेति । बन्धुजनताः तद्बन्धुजनसमूहाः तदोकस्तद्गृहं बुद्ध्वापि नागुः नागमन् । आङ् पूर्वादिणोर्लुङ् । अग्निं न ददुः न प्रायच्छन् । अमुमार्यं च खला दुर्जनाः निनिन्दुः कुत्सां चक्रुः । इयत्कालं परामृशतोऽस्मानुदास्य सहसाधुनैवागत्य गृही पुत्र इव संन्यासी अधिकारीव किं किं कर्तुं उद्युङ्क्ते इति दुर्वाक्यान्यूचुरित्यर्थः । स आचार्यः कमण्डलुजलैः प्रोक्षन् शवं च चलयन् तत्करोतीति णिच् गमयन् दक्षात्करात् उपचिताग्निः संपादितानलः अमुं शवं ददाह दग्धवान् ॥

संस्कृत्य मातरमतीव यतीश्वरोऽयं
तद्देशगानशपतापि जनान्सरोषम् ।

भिक्षा च मा भवतु वो भवने यतीनां
गेहे शवं दहत मास्तु च शिष्टतेति ॥ ६६ ॥

संस्कृत्येति । अयं यतीश्वरः आचार्यः मातरं संस्कृत्य तद्देशगानपि जनान् वः युष्माकं भवने यतीनां भिक्षा मा भवतु । गेहे गृहे शवं दहत । शिष्टता च वः मास्त्विति सरोषम् अतीव अशपत ॥

देशे समागतममुं कलयन्महान्तं
द्राग्राजशेखरनृपः सविधं समेत्य ।
तं प्राणमद्गुरुरथैष तमप्यपृच्छ-
त्किं नाटकत्रयमिह प्रथते भुवीति ॥ ६७ ॥

देश इति । राजशेखरनृपः केरलदेशाधिपतिः देशे समागतं महान्तममुमाचार्यं कलयन् जानन् सन् द्राक् शीघ्रं सविधं समीपं समेत्य तम् आचार्यं प्राणमत् प्रणाममकरोत् । अथानन्तरम् एष गुरुः आचार्यः इह भुवि नाटकत्रयं प्रथते किमिति तं राजानमपृच्छत् ॥ ६७ ॥

स्वामिन्गतं तदनले बत मे प्रमादा-
दित्युक्तवांस्तदनु कारुणिकः सुमेधाः ।
स्मृत्वा तदैव तदलीलिखदेष चित्रं
यच्छ्रावितं नृपतिना सकृदेव बाल्ये ॥ ६८ ॥

स्वामिन्निति । हे स्वामिन् मे प्रमादात् तन्नाटकत्रयम् । अनले

गतम् । बतेति खेदे । इत्युक्तवान् नृप इति शेषः । तदनु तत्पश्चात्कारुणिकः दयालुः सुमेधाः एव आचार्यः । नृपतिना राजशेखरेण बाल्ये यन्नाटकत्रयं सकृदेव श्रावितं तत् तदेव तस्मिन्काल एव स्मृत्वा अलीलिखत् लेखितवान् । चित्रम् आश्चर्यम् । 'लिख अक्षरविन्यासे' इत्यस्मात् णिजन्ताल्लुङ् ॥ ६८ ॥

अत्यद्भुतं तदवयन्नृप इत्यवादी-
त्त्वत्किंकरोऽस्मि सुनियुङ्क्ष्व मुने विधेयम् ।
शप्तास्तु कारटिपुरेऽथ यथा मयामी
कार्यास्तथैव भवतेत्यशिषद्यतिस्तम् ॥ ६९ ॥

अतीति । अत्यद्भुतं तत् लेखनं अवयन् जानन् नृपः राजशेखरः हे मुने त्वत्किंकरः त्वद्भृत्यः अस्मि भवामि । विधेयं विधातुं शक्यं सुनियुङ्क्ष्व सुष्ठु अनुजानीष्व इत्यवादीत् । यतिः आचार्यस्तं राजशेखरं अथ कारटिपुरे मया यथा अमी लोकाः शप्तास्तथैव भवता कार्याः इति अशिषत् अशिक्षत् । 'शासु अनुशिष्टौ' इत्यस्मात् लुङि 'शास इदङ्हलोः' इतीत्वम् ॥ ६९ ॥

अद्यापि तत्र सफलोऽस्ति तदीयशाप
उक्तं महद्भिरफलं न कदापि लोके ।
इत्थं विधाय यतिराडखिलं विधेयं
छात्रप्रतीक्ष्यथ फलाद्यशनैरुवास ॥ ७० ॥

अद्यापीति । तत्र तस्मिन्देशे तदीयशापः अद्यापि सफलः

अस्ति । तथा हि लोके महद्भिरुक्तं कदापि अफलम् न न भविष्यति । अथ अनन्तरं यतिराडाचार्यः अखिलं विधेयं विधातुमर्हं विधाय कृत्वा छात्रप्रतीक्षी छात्रान् प्रतीक्षते तच्छीलः छात्रप्रतीक्षी सन् फलाद्यशनैः फलमूलकन्दाद्याहारैः उवास उषितवान् ॥

**ततः सुब्रह्मण्याद्यमरनिलयेषु प्रविचर-**
**न्ततः स्वैरं हर्षादपि जनपदांस्तौलवमुखान् ।**
**पवित्रीकुर्वाणः परशिव इवाशेषविनुतो**
**मतिश्रीसाम्राज्ये व्यजयत महान्शंकरगुरुः ॥**

इति श्रीमत्परमहंसपरिव्राजकादिसकलविद्याविशारदपण्डित-
पुण्डरीकमण्डलीमार्ताण्डश्रीमत्सच्चिदानन्दभारती-
स्वामिभिर्निर्मापिते विद्वद्बालकलक्ष्मणशास्त्रि-
विरचिते गुरुवंशे महाकाव्ये
**द्वितीयः सर्गः ॥**

**तत इति ।** ततः अनन्तरं सुब्रह्मण्याद्यमरनिलयेषु सुब्रह्मण्यः षण्मुखः आदिर्येषां ते ते च ते अमराश्च तेषां निलयेषु 'ब्रह्मा विप्रः पितामहः' इति अमरकोशे उक्तया रीत्या ब्राह्मणार्थकाद्ब्रह्मशब्दात् 'तस्मै हितम्' इत्यधिकारे 'खलयवमाषतिलवृषब्रह्मणश्च' इति सूत्रेण यत्प्रत्यये सति अन्नदानाभीष्टसाधनादिना हितत्वात् षण्मुखार्थकः सुब्रह्मण्यशब्दः । तथा चोक्तं स्कान्दे शंकरसंहितायाम्— 'ब्राह्मणानामहं देवः सुतरां मत्सुतः प्रिये । सुब्रह्मण्यः समाख्यातः सुरासुरनमस्कृतः'

इति । वासुकौ व्यवहारस्तु तदंशत्वात् । उक्तं च सनत्कुमारसंहितायाम्– 'मदंशेनाहिराट् साकं धारातीरे मनोरमे । वासुकिर्वामलूरस्थः पूजार्हः संभवेत्सदा । इदं प्रसन्नदिवसम्' इत्यादि । प्रविचरन् संचलन् हर्षात् तौलवमुखान् जनपदान् देशान् स्वैरं वसन् पवित्रीकुर्वाणः । अभूततद्भावे च्विः । परशिव इव ब्रह्मविष्णुरुद्रेश्वरसदाशिवेभ्यः पञ्चकृत्यकर्तृभ्योऽपि उत्कृष्टः । गतास्ते मंचत्वं द्रुहिणहरिरुद्रेश्वरभृत इत्याद्यभियुक्तोक्तिषु चोक्तः सर्वमूलमूर्तिषु षट्त्रिंशत्तत्त्वाभिमानीव अशेषैः समस्तैर्लोकैर्विनुतः महान् शंकरगुरुः मतिश्रीसाम्राज्ये ज्ञानैश्वर्ययोः साम्राज्ये व्यजयत सर्वोत्कृष्ट आसीत् । विपूर्वाज्जयतेर्लङ् । ज्ञानप्रदः ऐश्वर्यप्रदश्च महायोगीन्द्रः अयमेव लोकपूज्य इति सर्वे शंकराचार्यं स्तुवन्ति इति भावः ॥ शिखरिणीवृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरणी' इति लक्षणात् ॥ ७१ ॥

इति गुरुवंशव्याख्यायां भावबोधिन्यां
द्वितीयः सर्गः ॥



# तृतीयः सर्गः ॥

---

श्रीशंकराचार्यजगद्गुरुं त-
मन्विष्य सर्वोऽपि च संदिदृक्षुः ।
समागतः शिष्यगणः सहर्ष-
मालोक्य तत्पादयुगं ववन्दे ॥ १ ॥

रेवातीरपरित्यक्तशिष्यसंदर्शनाद्याह— श्रीशंकराचार्येति । श्रीशंकराचार्यजगद्गुरुं तमन्विष्य संदिदृक्षुः संदर्शनेच्छुः 'सनाशंसभिक्ष उः' इति उप्रत्ययः । समागतः सर्वोऽपि शिष्यगणः सहर्षम् आलोक्य तत्पादयुगं ववन्दे अभिवादयामास । सर्गेऽस्मिन्निन्द्रवज्रोपेन्द्रवज्रयोरुपजातिर्वृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीया उपजातयस्ताः' इति लक्षणात् ॥ १ ॥

सर्वेषु शिष्येष्वपि सान्त्वितेषु
सगद्गदं प्राह स पद्मपादः ।
आयानकाले भवनं गतोऽस्थां
पूर्वाश्रमे मातृसहोद्भवस्य ॥ २ ॥

सर्वेष्विति । सर्वेषु शिष्येषु गुरुणा सान्त्वितेषु सत्सु स पद्म-

पादः पद्मपादाचार्यः सगद्गदं गद्गदाक्षरेण सह यथा स्यात्तथ प्राह । प्राहेति तृतीयश्लोकस्थेतिशब्देनान्वयः । तत्प्रकारमाह— आयानकाल इति । आयानकाले पूर्वाश्रमे मातृसहोद्भवस्य सदनं गृहं गतः सन् अस्थां स्थितोऽस्मि । 'ष्ठा गतिनिवृत्तौ' इत्यस्मा-ल्लुङि गतिस्था इति सिचो लुक् ॥ २ ॥

**स्नेहेन चादर्शयमार्य टीकां**
**तुष्टाव धूर्तश्चिखिदे च चित्ते ।**
**मत्स्थापितं पुस्तकमेष दृष्ट्वा**
**सेर्ष्यः स्वमप्याशु गृहं ददाह ॥ ३ ॥**

स्नेहेनेति । हे आर्य । टीकां भवत्कारितां ब्रह्मसूत्रभाष्यटीकां स्नेहेन अदर्शयम् दर्शितवानस्मि । सः धूर्तः । तुष्टाव स्तुतवान् । चित्ते मनसि चिखिदे खेदं कृतवान् । 'खिद दैन्ये' इत्यस्माल्लिट् । एष मातुलः मत्स्थापितं पुस्तकं दृष्ट्वा सेर्ष्यः ईर्ष्यया असूयया सहितः सन् स्वं स्वकीयमपि गृहं आशु शीघ्रं ददाह दग्धवान् ॥

**मह्यं ददौ मान्द्यकरं दुरात्मा**
**गरं च भैक्ष्ये बहु किं ब्रवीमि ।**
**स बालिशः पुस्तकहारकोऽभू-**
**त्कृतापराधोऽस्मि गुरो सहेति ॥ ४ ॥**

मह्यमिति । दुरात्मा भैक्ष्ये भक्षणीये वस्तुनि मान्द्यकरं मान्द्यं करोति तच्छीलं गरं विषं मह्यं ददौ दत्तवान् । सः बालिशः

त्रात्यः पुस्तकहारकः पुस्तकस्य हारको हर्ता अभूत् । अहं कृतापराधः अस्मि । हे गुरो सह क्षमस्व । इति प्राहेत्यनेनान्वयः ॥ ४ ॥

**एवं मुनीन्द्रो गदितोऽमुना प्रा-**
**गाकर्णितामादिमपञ्चपादीम् ।**
**स लेखयामास दयार्द्रचेताः**
**सैव प्रसिद्धा भुवने बभूव ॥ ५ ॥**

**एवमिति** । एवं पूर्वोक्तप्रकारेण अमुना पद्मपादाचार्येण गादितः उक्तः मुनीन्द्रः मुनिश्रेष्ठः दयार्द्रचेताः दयया आर्द्रं चेतो यस्य स तथोक्तः शंकराचार्यः प्राक्पूर्वं आकर्णितां श्रुतां आदिमपञ्चपादीं लेखयामास । भुवने लोके सैव पञ्चपाद्येव प्रसिद्धा बभूव ॥ ५ ॥

**संप्राप्तसंतोषतदादिशिष्यैः**
**साकं जगत्यां विजयं विधित्सुः ।**
**अद्वैतसिद्धान्तसरोजसूर्यो**
**मध्यार्जुनेशावसथं ययौ सः ॥ ६ ॥**

**संप्राप्तेति** । संप्राप्तसंतोषैः तदादिशिष्यैः पद्मपादाचार्यादिशिष्यैः साकं जगत्यां भूलोके विजयं विधित्सुः अद्वैतसिद्धान्तरूपस्य कमलस्य सूर्यः विकासक इति यावत् । सः आचार्यः मध्यार्जुनेशावसथं मध्यार्जुनेशस्य आवसथम् आलयं ययौ जगाम ॥ ६ ॥

तं पूजयित्वानुचरैः सभायां
पप्रच्छ तत्त्वं किमिहेति योगी ।
दृश्याकृतिप्रोच्चभुजोऽथ सत्य-
मद्वैतमेवेत्यवदत्त्रिरीशः ॥ ७ ॥

तमिति । योगी आचार्यः अनुचरैः शिष्यैः सह तं मध्यार्जुनेशं पूजयित्वा सभायां किमिह तत्त्वमिति पप्रच्छ । अथानन्तरं दृश्याकृतिप्रोच्चभुजः प्रसन्नतया अवलोकनीयायामाकृतौ प्रोच्चभुजः ऊर्ध्वबाहुः ईशः शिवः अद्वैतमेव सत्यमिति त्रिः त्रिवारम् अवदत् उक्तवान् ॥ ७ ॥

संमानितस्यास्य बुधैस्तदानीं
शिष्या अभूवंस्तत एव भूरि ।
स्थलेषु सल्लीलमनन्तशायि-
पुर्यादिमेष्वन्यमतान्यजैषीत् ॥ ८ ॥

संमानितस्येति । तदानीं बुधैः संमानितस्यास्य शिष्याः भूरि अभूवन् । तत एव तस्मान्मध्यार्जुनादेव अनन्तशायिपुर्यादिमेषु अनन्ते शेषे शेते तच्छीलः अनन्तशायी तस्य पुरी आदिमा येषां तानि तेषु तथोक्तेषु अन्येषां स्वाभिमतानि सल्लीलं सती लीला यस्मिन्कर्मणि तत्तथोक्तम् अजैषीत् जितवान् । स इति शेषः ॥

श्रीरामसेतुं गतवान्यतीन्द्रः
स्नात्वा धनुष्कोटिसुतीर्थराजे ।

रामेश्वरं दाशरथिप्रसन्नं
संपूज्य देवं सममानि शिष्यैः ॥ ९ ॥

श्रीरामेति । यतीन्द्रः शंकराचार्यः श्रीरामसेतुं रामेण बद्धं सेतुं गतवान् सन् धनुष्कोटिसुतीर्थराजे स्नात्वा दाशरथिप्रसन्नं दाशरथेः दशरथतनयस्य रामस्य प्रसन्नं रामेश्वरं देवं संपूज्य शिष्यैः सममानि संमानितः । संपूर्वान्मान पूजायामित्यस्मात्कर्मणि लुङि चिण् ॥ ९ ॥

स तौलवग्रामवरं प्रतीतं
श्रीरौप्यपीठाख्यपुरं प्रपेदे ।
श्रीमाननन्तेश्वरमर्चयित्वा
चन्द्रेश्वरं चारु मुनीन्द्र आर्चत् ॥ १० ॥

स इति । सः मुनीन्द्रः प्रतीतं प्रसिद्धं तौलवग्रामवरं तौलवानां ग्रामाः द्वात्रिंशत् तेषु वरं श्रेष्ठं श्रीरौप्यपीठाख्यपुरं श्रीरौप्यपीठमित्याख्या यस्य तत्पुरं प्रपेदे प्राप्तवान् । प्रपूर्वात्पद्लृ गतौ इत्यस्मात्कर्तरि लिट् । श्रीमानयमनन्तेश्वरम् अर्चयित्वा चन्द्रशेखरं चारु आर्चत् । अर्च पूजायामित्यस्माल्लङ् । पातालगामी रजतपीठोदितसुवर्णमयलिङ्गात्मानमनन्तेश्वरम् अनन्तः पूजयित्वा विष्णुशय्यात्वं प्रापेति कुपितगौरीविरहेश्वरशप्तचन्द्रोऽपि चन्द्रेश्वरं पूजयित्वा मुक्तशापः कलाविवृद्धिं दिनंदिनं प्रापेति च सह्याद्रिखण्डादौ प्रसिद्धम् । अत एव पुरस्य तथा प्राप्तं नामेति बोध्यम् ॥ १० ॥

तदालये विश्रमिणं यतीन्द्र-
मादाय बालं जननादिमूकम् ।
एत्य द्विजः कश्चिददर्शयत्त-
मावेदयंस्तज्जनितं स्वमाधिम् ॥ ११ ॥

तदिति । तदालये चन्द्रशेखरस्यालये विश्रमिणं यतीन्द्रम् आचार्यं कश्चिद्द्विजः जननादिमूकं बालं आदाय आगत्य तं बालकं तज्जनितं मूकपुत्रजनितं स्वम् आत्मीयम् आधिं मनोव्यथाम् आवेदयन् विज्ञापयन् सन् अदर्शयत् दर्शितवान् ॥ ११ ॥

दयानिधिस्तं प्रणयेन बाल-
मागाः कुतस्त्वं च क इत्यपृच्छत् ।
प्रौढार्हतत्त्वार्थवचोभिरेव
प्रत्युत्तरं सोऽप्यवदत्कुमारः ॥ १२ ॥

दयानिधिरिति । दयानिधिराचार्यः तं बालं त्वं कः कुतः आगाः आगतोऽसि इति प्रणयेन स्नेहेन अपृच्छत् पृष्टवान् । सोऽपि कुमारः प्रौढार्हतत्त्वार्थवचोभिरेव प्रौढानामर्हाणि तत्त्वार्थानि वचांसि तैः नाहं मनुष्य इत्यादिद्वादशश्लोकात्मकैः प्रत्युत्तरं अवदत् कथितवान् ॥ १२ ॥

आश्चर्यवेत्तानुपमं वटुं त-
मादाय संन्यासमदत्त युक्तम् ।

अदाच्च हस्तामलकेति नाम
यत्तेन हस्तामलकीकृता चित् ॥ १३ ॥

आश्चर्येति । आश्चर्यवेत्ता आचार्यः अनुपमं तं बटुम् आदाय संन्यासम् अदत्त दत्तवान् । युक्तम् तद्दानं सांप्रतम् । यद्यस्मात्कारणात् तेन बालेन चित् ज्ञानं हस्तामलकीकृता । स्वाधीनीकृतेति भावः । अस्मात्कारणात् हस्तामलकेति नाम अदात् दत्तवान् ॥

संचारतः स्वैरमथाब्धितीरे
भगन्दरस्तद्गुरुदेहमाप ।
कश्चिद्विनेयोऽस्य गुरोर्निषेवां
विशेषतो भक्तिवशाच्चकार ॥ १४ ॥

संचारत इति । अथानन्तरम् अब्धितीरे स्वैरं स्वच्छन्दं संचारतः उष्णातिशयात् भगन्दरः भगन्दराख्यो रोगः तद्गुरुदेहं तस्य शंकराचार्यस्य गुरोर्देहम् आप प्राप । तदा विनेयः विनयार्हः कश्चित् शिष्यः अस्य गुरोराचार्यस्य निषेवां सेवनं भक्तिवशात् विशेषतश्चकार ॥ १४ ॥

धत्ते जुगुप्सां न कदापि सेवा-
स्वावश्यकं किंचन नातियाति ।
अज्ञस्य तस्यापि मुखात्कदाचि-
द्विनिर्गतं तोटकवृत्तजातम् ॥ १५ ॥

धत्त इति । सः शिष्यः कदापि सेवासु जुगुप्सां बीभत्सां न

धत्ते न धारयति । किं च न किंचिदप्यावश्यकम् अवश्यकर्तव्यम् नातियाति नातिक्रामति । ईदृशस्य तस्याप्यज्ञस्य मुखात् तोटकवृत्तजातम् 'इह तोटकमम्बुधिसैः कथितम्' इतिलक्षणलक्षितं वृत्तजातं विनिर्गतम् अभूदिति शेषः ॥ १५ ॥

आकर्ण्य तां चित्रकृतिं यतीन्द्रः
संन्यासदानेन तमन्वगृह्णात् ।
यत्तन्मुखात्तोटकवृत्तमागा-
त्तत्तोटकाचार्यसुनाम चक्रे ॥ १६ ॥

आकर्ण्येति । यतीन्द्रः आचार्यः तां चित्रकृतिम् आश्चर्यावहां स्तोत्ररूपां कृतिम् आकर्ण्य तं शिष्यं संन्यासदानेन अन्वगृह्णात् अनुगृहीतवान् । यद्यस्मात्कारणात् तन्मुखात् तोटकवृत्तमागात् आगमत् तस्मात्कारणात् तोटकाचार्य इति सुनाम चक्रे कृतवान् ॥

भगन्दरस्यास्य चिकित्सका न
दक्षाः क्षिताविव्यवबुध्य शिष्यैः ।
औदास्यहानेऽर्थित एव मन्त्रै-
र्नासत्ययुग्मं स तदाचकर्ष ॥ १७ ॥

भगन्दरस्येति । क्षितौ भूमौ अस्य भगन्दरस्य दक्षाः समर्थाश्चिकित्सकाः रोगापनेतारः वैद्याः । 'भिषग्वैद्यौ चिकित्सके' इत्यमरः । कित निवासे रोगापनये चेत्यस्मात् 'गुप्तिज्किद्भ्यः सन्' इति सन् । न सन्तीति शेषः । इति शिष्यैः अवबुध्य ज्ञात्वा औदास्य-

ज्ञाने औदासीन्यापगमविषये अर्थितः प्रार्थित एव स आचार्यः मन्त्रैः आकर्षणाय संप्रयुक्तैः तदा तस्मिन्काले नासत्ययुग्मं अश्विनीकुमारयुगळम् आचकर्ष आकृष्टवान् ॥ १७ ॥

दस्रौ मनुष्येष्वचिकित्सकौ तौ
संकोचतः प्रोचतुरेतदिन्द्रम् ।
अदापयद्देवगुरुस्तदाज्ञां
नृशंकरत्वं कलयंस्तदाभ्याम् ॥ १८ ॥

दस्राविति । मनुष्येषु अचिकित्सकौ तौ दस्रौ अश्विनीकुमारौ इन्द्रं प्रति एतत् आकर्षणं संकोचतः संकोचात् प्रोचतुः उक्तवन्तौ । तदा तस्मिन्काले देवगुरुः बृहस्पतिः नृशंकरत्वं मनुष्यशिवभावं कलयन् एतदीयं बोधयन् तदाज्ञां देवेन्द्रस्यानुज्ञाम् आभ्यामश्विनीपुत्राभ्यामदापयत् दापितवान् ॥ १८ ॥

आचार्यदेहस्य निरामयत्वं
तावागतौ चक्रतुरञ्जसैव ।
आशीःप्रदानाधिगतप्रमोदौ
तौ जग्मतुर्लोकहितौ पुरीं स्वाम् ॥ १९ ॥

आचार्येति । आगतौ तावश्विनीपुत्रौ आचार्यदेहस्य निरामयत्वं नीरोगत्वम् अञ्जसैव शीघ्रमेव चक्रतुः लोकहितौ लोकानां हितौ तौ अश्विनीपुत्रौ आशीःप्रदानाधिगतप्रमोदौ आशीःप्रदानेन आचार्यकर्तृकाशीर्दानेन अधिगतः प्राप्तः संतोषो ययोस्तौ तथोक्तौ सन्तौ

-स्वां पुरीं जग्मतुः गतवन्तौ ॥ १९ ॥

गोकर्णयात्रां स विधाय योगी
सह्याद्रिमासाद्य सवेदपादम् ।
वराहदंष्ट्रोद्भवतुङ्गभद्रा-
मूले व्यधादाह्निकमादरेण ॥ २० ॥

गोकर्णेति । स योगी शंकराचार्यः गोकर्णयात्रां विधाय सवेदपादं वेदपादपर्वतेन सहितं सह्याद्रिं सह्यपर्वतम् आसाद्य प्राप्य वराहदंष्ट्रोद्भवतुङ्गभद्रामूले वराहस्य तदवतारस्य विष्णोः दंष्ट्राभ्याम् उद्भवो यस्याः सा तथोक्तायास्तुङ्गभद्रायाः नद्याः मूले उत्पत्तिस्थले दंष्ट्राभ्यामुत्पन्नयोस्तुङ्गभद्रानद्योः उभयोरप्येकत्वव्यवहारो विधेय इति ब्रह्माण्डपुराणादिषु प्रसिद्धम् । आदरेण आह्निकं व्यधात् विहितवान् विपूर्वाद्धातोर्लङ् ॥ २० ॥

विभाण्डकस्याश्रममाप्य तुङ्ग-
भद्रातटेऽपश्यदयं विचित्रम् ।
प्रसार्य भोगं भुवि रक्ष्यमाणं
तच्छायया भोगिवरेण भेकम् ॥ २१ ॥

विभाण्डकस्येति । अयम् आचार्यः विभाण्डकस्य महर्षेः आश्रमम् आप्य प्राप्य तुङ्गभद्रातटे भोगिवरेण सर्पवर्येण भोगं फणाम् । ‘ भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ’ इत्यमरः । प्रसार्य

विस्तार्य तच्छायया तस्य भोगस्य च्छायया रक्ष्यमाणं भेकं मण्डूकम् भुवि चित्रं यथा स्यात्तथा अपश्यत् ॥ २१ ॥

निर्वैरसत्त्वं कलयन्स्थलं त-
च्चित्ते चकारात्मनिवासयोग्यम् ।
श्रीशैलशेषाचलनारसिंह-
गिरीन् जगन्नाथमथो जगाम ॥ २२ ॥

निर्वैरेति । स आचार्यः तत्स्थलं निर्वैरसत्त्वं निर्वैराः सत्त्वाः प्राणिनो यस्मिन् तत्तथोक्तं कलयन् जानन् आत्मनिवासयोग्यं चित्ते चकार । मनसि गोचरीचकारेत्यर्थः । अथो अनन्तरं श्रीशैलशेषाचलनारसिंहगिरीन् जगन्नाथं च तत्प्रदेशान् जगाम गतवान् ॥ २२ ॥

वाराणसीं योगिवरोऽधिगम्य
भुजैरिव श्रीहरिरेष शिष्यैः ।
सहात्मना पञ्च मठानमीषां
प्रकल्प्य तस्थौ कतिचिद्दिनानि ॥ २३ ॥

वाराणसीमिति । योगिवर आचार्यः वाराणसीं काशीं वरणासीनद्योर्मध्ये स्थितत्वात् वाराणसी इति पृषोदरादित्वान्निपातितः । श्रीहरिश्चतुर्भुजैरिव शिष्यैः पद्मपादाचार्यादिभिः सह अधिगम्य प्राप्य आत्मना सह अमीषां शिष्याणां पञ्च मठान्प्रकल्प्य कतिचि-

द्दिनानि तस्थौ स्थितवान् । 'कालाध्वनोरत्यन्तसंयोगे' इति सप्तम्यर्थे द्वितीया ॥ २३ ॥

ततः स काश्मीरमुपेत्य देशं
श्रीशारदागारचतुर्दिशासु ।
द्वारेषु जित्वा विदुषां प्रवेशं
प्राप्यं निशम्याशु जगाम तत्र ॥ २४ ॥

तत इति । ततः अनन्तरं स आचार्यः काश्मीरदेशम् उपेत्य श्रीशारदागारचतुर्दिशासु श्रीशारदाया अगारस्य गृहस्य चतसृषु दिशासु दिक्षु । 'आपं चैव हलन्तानां यथा वाचा निशा दिशा' इति भागुरिवचनात् दिक् शब्दाट्टाप् । द्वारेषु जित्वा तत्रत्यानिति शेषः । विदुषां विबुधानां प्राप्यं प्रवेशं निशम्य श्रुत्वा तत्र आशु शीघ्रं जगाम ॥ १४ ॥

तद्दक्षिणद्वारि बुधा वसन्तः
शास्त्रेषु पप्रच्छुरथैकमेकम् ।
दत्तोत्तरे सर्वविवादिलोके
मार्गप्रदर्शिन्यपि तद्विवेश ॥ २५ ॥

तदिति । अथ अनन्तरं तद्दक्षिणद्वारि तस्य शारदागारस्य दक्षिणस्यां द्वारि द्वारे । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । वसन्तः बुधाः विद्वांसः शास्त्रेषु वेदान्तादिषु एकमेकं प्रष्टव्यांशं पप्रच्छुः पृष्टवन्तः । प्रच्छ ज्ञीप्सायामित्यस्मात्कर्तरि लिट् । तमाचार्यमिति शेषः । सर्व-

विवादिलोके सर्वस्मिन् वादिजने दत्तोत्तरे सति दत्तमुत्तरं यस्मै स तथोक्तस्तस्मिन् मार्गप्रदर्शिन्यपि सति तत् शारदागारं विवेश प्रविष्टवान् ॥ २५ ॥

सर्वज्ञपीठं द्रुतमारुरुक्षौ
तस्मिंस्तदाभूदशरीरवाणी ।
दद्याः परीक्षामखिलासु विद्या-
स्वारोह पीठं परधा तु नेति ॥ २६ ॥

सर्वज्ञेति । तस्मिन् आचार्ये सर्वज्ञपीठं द्रुतं शीघ्रं आरुरुक्षौ आरोढुमिच्छौ सति तदा अखिलासु विद्यासु परीक्षां दद्याः देहि एवं चेत् पीठं आरोह परधा तु न दद्याश्चेत् नारोहेति अशरीरवाणी आकाशवाक्यम् अभूत् संजाता ॥ २६ ॥

दित्सामवेत्यास्य यतीशवाण्योः
मध्ये बबन्धुः प्रतिसीरिकां ज्ञाः ।
कलासु सर्वासु परीक्ष्य देवी
पप्रच्छ वात्स्यायनशास्त्र एतम् ॥ २७ ॥

दित्सामिति । अस्याचार्यस्य दित्सां परीक्षादानेच्छाम् अवेत्य ज्ञात्वा ज्ञाः विद्वांसः यतीशवाण्योर्मध्ये यतीश्वरस्य वाग्देवतायाश्च अन्तरे प्रतिसीरिकां जवनिकां बबन्धुः बन्धनं चक्रुः । देवी वाणी सर्वासु कलासु विद्यासु परीक्ष्य वात्स्यायनशास्त्रे वात्स्यायनप्रोक्तकाम-शास्त्रे एतम् आचार्यं पप्रच्छ पृष्टवती ॥ २७ ॥

दिनानि कान्यप्यवधिं तदुक्त्यै
याचन्प्रमीतामरुकेन्द्रकायम् ।
प्रविश्य योगाद्बुभुजे स भोगां-
श्चक्रे कृतिं चामरुकं तदर्हम् ॥ २८ ॥

दिनानीति । सः यतीन्द्रः तदुक्त्यै कामशास्त्रप्रश्नोत्तरोक्त्यै कान्यपि दिनानि अवधिं याचन् देवीं प्रतीतिशेषः । प्रमीतामरुकेन्द्रकायं प्रमीतो मृतः अमरुकेन्द्रः एतन्नामा तद्देशाधिपतिः तस्य कायं देहं योगात्प्रविश्य प्रवेशं कृत्वा । स च परकायप्रवेशः योगशास्त्रेऽभिहितः 'बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः' इति । भोगान् स्रक्चन्दनविषयादिजन्यसुखानि बुभुजे अनुबभूव । तदर्हं सुखानुभविनामर्हं योग्यम् अमरुकं तन्नामकं कृतिं ग्रन्थं च चक्रे ॥ २८ ॥

शङ्कां प्रविज्ञाय तदा महिष्या
तद्देहमुत्सृज्य निजं प्रविश्य ।
स्तुत्वा नृसिंहं पुनरेत्य देवीं
पृष्टस्तया कामकलामवोचत् ॥ २९ ॥

शङ्कामिति । स आचार्यः तदा तस्मिन्काले महिष्याः कृताभिषेकायाः । 'कृताभिषेका महिषी' इत्यमरः । शङ्काम् अयं स्वभर्ता न भवति परं त्वन्यो महायोगीति शङ्कां विज्ञाय ज्ञात्वा तद्देहं अमरुकसंबन्धि देहं उत्सृज्य त्यक्त्वा निजं देहं शिष्यैर्गुहायां परि-

रक्ष्यमाणं देहं प्रविश्य नृसिंहं स्तुत्वा करावलम्बस्तोत्रेण स्तुत्वा । योगीति शङ्कितवती महिषी एनं प्रौण्डं अविमोक्तुकामा देशे शवमन्वेष्य दाहनायाज्ञां दत्तवतीति वार्ता शिष्या विज्ञाय उपकारिकास्थममुमरुकवेषमाचार्यं भागवतवेषेणागत्य तत्त्वमसीत्यादिपदश्रावणादिभिः ज्ञानिनं तं प्राग्वृत्तान्तं स्मारयामासुः । तदा अग्निना ईषद्दह्यमानं स्वदेहं प्रविश्य तापोपशमनाय करावलम्बनस्तोत्रं कृतवानिति प्रसिद्धम् । पुनः देवीं वाणीम् एत्य उपगम्य तया वाण्या पृष्टः सन् कामकलां कामशास्त्रम् अवोचत् उक्तवान् ॥ २९ ॥

तुष्टा वरं ब्रूहि सुतेत्यवादीत्
यतेस्तु मे को नु वरोऽस्त्यथापि ।
याचे सहैवाम्ब मयागमं ते
श्रीऋश्यशृङ्गाश्रम इत्यगादीत् ॥ ३० ॥

तुष्टेति । तुष्टा सा वाणी हे सुत वरं ब्रूहीत्यवादीत् । यतेस्तु मे को नु वरोऽस्ति । अथापि हे अम्ब मातः श्रीऋश्यशृङ्गाश्रमे मया सहैव ते तव आगमं आगमनं याचे प्रार्थये । इत्यगादीत् उक्तवान् ॥ ३० ॥

तथेति साकं चलता चलन्ती
वरोक्तिवश्या तमियाय वाणी ।
श्रीतुङ्गभद्रातटरम्यभागे
तामर्चयामास स शंकरार्यः ॥ ३१ ॥

तथेति । वाणी तथेति तथा भवत्विति । उक्त्वेति शेषः । वरोक्तिवश्या सती वरदानवाक्याधीना सती चलता गच्छता आचार्येण साकं चलन्ती गच्छन्ती तम् ऋश्यशृङ्गाश्रमम् इयाय जगाम । सः शंकराचार्यः श्रीतुङ्गभद्रातटस्य भागे तां वाणीम् अर्चयामास पूजयामास ॥ ३१ ॥

शिष्यैश्चतुर्भिः सह तत्र विद्या-
व्यासङ्गशीलः स चिरं न्यवात्सीत् ।
विलोक्य यस्यास्य सभां जनौघो
जगाद पञ्चास्यसभं भुवीति ॥ ३२ ॥

शिष्यैरिति । तत्र ऋष्यशृङ्गाश्रमे स आचार्यः चतुर्भिः शिष्यैः सह विद्याव्यासङ्गशीलः सन् चिरं न्यवात्सीत् । निवासं कृतवान् । जनौघः जनसमूहः यस्यास्याचार्यस्य सभां विलोक्य भुवि पञ्चास्यसभं शिवसभम् इति । 'सभा राजामनुष्यपूर्वा' इति नपुंसकत्वम् । जगाद उक्तवान् । चतुर्दिक्षु प्रसिद्धीभविष्यच्छिष्यास्यचतुष्केण मिलितं गुर्वास्यमेकमिति पञ्चमुखस्य सभया सादृश्यात्तत्त्वारोप इति ज्ञेयम् ॥ ३२ ॥

श्रीचन्द्रमौलीश्वरलिङ्गमस्मै
सद्रत्नगर्भं गणनायकं च ।
स विश्वरूपाय सुसिद्धदत्तं
दत्त्वा न्यगादीच्चिरमर्चयेति ॥ ३३ ॥

श्रीति । स आचार्यः अस्मै विश्वरूपाचार्याय सुसिद्धदत्तं सुसिद्धेन रेवणासिद्धमहायोगिना दत्तं श्रीचन्द्रमौलीश्वरलिङ्गं सद्रत्नगर्भं सद्रत्नं माणिक्यं गर्भे यस्य स तथोक्तस्तं गणनायकं विघ्नेश्वरं च दत्त्वा चिरं बहुकालम् अर्चय पूजय इति न्यगादीत् अवोचत् ॥

सुरेश्वराचार्य सरस्वतीं त्वं
　संपूजयन्नास्स्व चिरादिहेति ।
दत्त्वाभ्यनुज्ञां विनताय तस्मै
　शिष्यैः समस्तैः स जगाम काञ्चीम् ॥ ३४ ॥

सुरेश्वरेति । हे सुरेश्वराचार्य त्वं सरस्वतीं संपूजयन् सन् इह अस्मिन् स्थाने चिरात् बहुकालम् आस्स्व वर्तस्व । आस उपवेशन इत्यस्माल्लोडात्मनेपदमध्यमपुरुषैकवचनम् । इति विनताय नमस्कर्त्रे । विपूर्वान्नमेः 'गत्यर्थाकर्मक–' इति कः । तस्मै सुरेश्वराचार्याय अभ्यनुज्ञां दत्त्वा समस्तैः शिष्यैः सह काञ्चीं काञ्च्याख्यां पुरीं जगाम ॥

ईशानविष्ण्वोरभिधानयुग्मा-
　त्काञ्चीनगर्यौ समकारयत्सः ।
कामाक्ष्यभिख्यारमणीयमूर्ते-
　र्देव्याः प्रतिष्ठां मुनिराडकार्षीत् ॥ ३५ ॥

ईशानेति । स मुनिराट् मुनिश्रेष्ठः आचार्यः ईशानविष्ण्वोः शिवकेशवयोः अभिधानयुग्मात् नामयुगलं प्रयोज्य । ल्यब्लोपे पञ्चमी । काञ्चीनगर्यौ शिवकाञ्ची विष्णुकाञ्चीति नामयुक्ते पुर्यौ

समकारयत् कारितवान् कामाक्ष्यभिख्यारमणीयमूर्तेः कामप्रदे अक्षिणी यस्याः सा कामाक्षी तदभिख्यया तन्नाम्ना रमणीया मूर्तिः यस्याः सा तथोक्ता तस्याः देव्याः प्रतिष्ठाम् अकार्षीत् कृतवान् ॥ ३५ ॥

**शैवादयः षड्यमिनो यतीशं**
**संप्रार्थ्य तं स्वस्वमतोदयाय ।**
**अनुग्रहं प्राप्य जगद्गुरोश्च**
**ते प्रस्थिताः स्वस्वमतप्रवीणाः ॥ ३६ ॥**

शैवादय इति । शैवादयः शैवशाक्तगाणपत्यवैष्णवसौरकापालिकाः षड्यमिनः । परमतकालानलाचार्यत्रिपुराकुमाराचार्यगिरिजाकुमाराचार्यलक्ष्मणाचार्यदिवाकराचार्यवटुकनाथाचार्याः यतीशं तम् आचार्यं स्वस्वमतोदयाय संप्रार्थ्य जगद्गुरोस्तस्य च अनुग्रहं प्राप्य स्वस्वमतप्रवीणाः ते प्रस्थिताः अभवन्निति शेषः ॥ ३६ ॥

**ततः स गत्वा बदरीवनं त-**
**च्छिष्यैः समेतो यतिसार्वभौमः ।**
**तत्र स्थितः कान्यपि वासराणि**
**स्वप्ने हरिं प्रैक्षत सुप्रसन्नम् ॥ ३७ ॥**

तत इति । स यतिसार्वभौमः ततस्तदनन्तरम् तद्बदरीवनं बदरिकाश्रमम् गत्वा कान्यपि वासराणि शिष्यैः समेतः तत्र स्थितः सन् स्वप्ने सुप्रसन्नं हरिं प्रैक्षत अद्राक्षीत् ॥ ३७ ॥

मूर्तिर्मदीया सलिलेऽत्र मग्ना-
स्त्युद्धृत्य तां संपरिपूजयेति ।
तदुक्तिमाकर्ण्य तथा विधाय
नारायणं तं समपूजयच्च ॥ ३८ ॥

मूर्तिरिति । मदीया मूर्तिः अत्र सलिले अलकनन्दाया जले मग्ना अस्ति उद्धृत्य तां परिपूजयेति तदुक्तिं हरेरुक्तिम् आकर्ण्य श्रुत्वा तथा विधाय तेनैव प्रकारेण कृत्वा मूर्तिमुद्धार्य तं नारायणं सः योगिराजः समपूजयच्च ॥ ३८ ॥

अद्यापि देवं नियमेन तस्मा-
त्समागतः केरलनामदेशात् ।
पौर्वाश्रमः स्वो जन एव चास्य
तदा तदा पूजयति प्रसिद्धम् ॥ ३९ ॥

अद्यापीति । अस्मिन्दिनेऽपि तस्मात्केरलनामदेशात् समागतः अस्याचार्यस्य पौर्वाश्रमः पूर्वाश्रमसंबन्धी । 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञः । स्वः ज्ञातिः 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । जन एव देवं नारायणं नियमेन तदा तदा पूजयतीति प्रसिद्धम् ॥ ३९ ॥

तदालयं कारयितुं स पद्म-
पादं नियम्याशु जगाम काशीम् ।

गुरोरनुज्ञां शिरसानुमोद्य

तन्मन्दिरं द्राग्निरमापयत्सः ॥ ४० ॥

तदालयमिति । स आचार्यः तदालयं तस्य नारायणस्यालयम् अगारं कारयितुं पद्मपादं पद्मपादाचार्यं नियम्य आशु शीघ्रं काशीं जगाम । सः पद्मपादाचार्यः गुरोः आचार्यस्य अनुज्ञां शिरसा अनुमोद्य सहर्षमङ्गीकृत्य तन्मन्दिरं तस्य नारायणस्य मन्दिरं द्राक् शीघ्रं निरमापयत् । निर्माणं कारितवान् ॥ ४० ॥

ततः कदाचिन्नृपतेरगारं

गतः स भिक्षां त्वरितं ययाचे ।

आलोचयज्ज्येष्ठवधूर्नृपस्य

सांसारिकावश्यककार्यधुर्या ॥ ४१ ॥

तत इति । कदाचित्कस्मिंश्चित्काले नृपतेः श्रीनगरराजस्य अगारं गृहं गतः सः पद्मपादाचार्यः त्वरितं यथा स्यात्तथा भिक्षां ययाचे याचितवान् । सांसारिकावश्यककार्यधुर्या संसारस्येदं सांसारिकं तच्च तत् आवश्यिककार्यं च तस्मिन् धुर्या धुरंधरा । 'धुरो-ड्ढक च' इति यत् । नृपस्य ज्येष्ठवधूः ज्येष्ठभार्या आलो-चयत् आलोचितवती ॥ ४१ ॥

अद्यालये कव्यमयं महात्मा

स्नातुं गतो नेह नृपः स एनम् ।

वीक्ष्याह्वयेदित्यथ सा तटिन्यां
स्नात्वा समेहीत्यवदद्यतीशम् ॥ ४२ ॥

अद्येति । अस्मिन् दिने आलये गृहे कव्यं पितृनुद्दिश्य क्रियमाणं श्राद्धं वर्तत इति शेषः । अयं यतीश्वरः महात्मा महास्वभावः । 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति वैजयन्ती । इह अत्र नृपः न नास्ति । स्नातुं गतः ; अस्तीति शेषः । स नृपः एनं यतीशं वीक्ष्य आह्वयेत् आकारयेदिति आलोचयदिति पूर्वेणान्वयः । अथ अनन्तरं सा ज्येष्ठभार्या यतीशं पद्मपादाचार्यं तटिन्यां नद्यां स्नात्वा समेहि समागच्छ । प्रार्थनायां लोट् । इति अवदत् अकथयत् ॥ ४२ ॥

विचार्य दूरां स नदीं क्षुधार्तो
बहिः समेत्योन्नतगण्डशैले ।
दण्डेन घातद्वयमाततान-
धाराद्वयं निःसृतमाशु तस्मात् ॥ ४३ ॥

विचार्येति । सः पद्मपादाचार्यः क्षुधार्तः सन् क्षुधया पीडितः सन् बहिः ग्रामाद्बहिः समेत्य समागत्य नदीं दूरां दूरवर्तिनीं विचार्य उन्नतगण्डशैले दण्डेन घातद्वयं द्विवारघातं आततान चकार । तस्माद्घातितगण्डशैलान्तःप्रदेशात् धाराद्वयम् आशु निःसृतम् ॥ ४३ ॥

स्नात्वाथ तत्राम्भसि योगिवर्यो
भिक्षार्थमागत्य गृहे न्यषीदत् ।

आश्चर्यवित्कव्यकृतेन तेना-
प्यन्नेन भिक्षामदित द्रुतं सा ॥ ४४ ॥

स्नात्वेति । अथानन्तरं तत्राम्भसि योगिवर्यः स्नात्वा भिक्षार्थं गृहे आगत्य न्यषीदत् उपविष्टः । आश्चर्यवित् आश्चर्यज्ञा सा कव्यकृतेनान्नेनापि द्रुतं शीघ्रं भिक्षामदित दत्तवती ॥ ४४ ॥

अत्रान्तरे सोऽपि गृहं समागा-
न्निमन्त्रितैर्विप्रवरैः सहैव ।
अश्रावयत्तं च कनिष्ठभार्या
द्वेषात्सपत्नीकृतकव्यनाशम् ॥ ४५ ॥

अत्रान्तर इति । अत्रान्तरे अस्मिन्नवसरे सोऽपि राजा निमन्त्रितैः विप्रवरैः सहैव गृहं समागात् । कनिष्ठभार्या राजकनिष्ठभार्या सपत्नीकृतकव्यनाशं सपत्न्या ज्येष्ठभार्यया कृतं कव्यस्य श्राद्धस्य नाशं यतिभिक्षादानवृत्तं द्वेषात् तं राजानम् अश्रावयच्च श्रावितवती ॥ ४५ ॥

कोपेन खड्गं परिगृह्य राजा
तं हन्तुकामः करमुद्दधार ।
स दर्शितश्रीनरसिंहरूपो
हस्तं तदा स्तम्भयदस्य योगी ॥ ४६ ॥

कोपेनेति । राजा कोपेन खड्गं परिगृह्य गृहीत्वा पद्मपादाचार्यं तं हन्तुकामः सन् करं हस्तमुद्दधार उद्धृतवान् । तदा योगी

पद्मपादाचार्यः संदर्शितश्रीनरसिंहरूपः सन् संदर्शितं श्रीनरसिंह-रूपं येन स तथोक्तः अस्य राज्ञः हस्तम् अस्तम्भयत् स्तब्धं कृतवान्। स्तम्भेर्हेतुमण्णिजन्ताल्लङ् ॥ ४६ ॥

तुष्टाव चैनं नृपतिस्तदा त-
तुष्ट्यै नृसिंहायतनं विभाव्य।
स्वमन्दिरं चास्य समर्चनाय
समर्पयामास समस्तराज्यम् ॥ ४७ ॥

तुष्टावेति। नृपतिः राजा एनं तुष्टाव च स्तुतवान्। तदा तस्मिन्काले तत्तुष्ट्यै तस्य नृसिंहरूपस्य यतेस्तुष्ट्यै संतोषाय स्वं स्वकीयं मन्दिरं नृसिंहायतनं नृसिंहालयं विभाव्य आलोच्य अस्य नृसिंहस्य अर्चनाय पूजनाय समस्तराज्यं समर्पयामास समर्पितवान् ॥ ४७ ॥

तदैव काशीनगरोषितः स
श्रीशंकराचार्यमुनिर्विशेषात्।
श्रीभैरवोपासकभैरवाख्य-
विप्रेण धूर्तेन चिरं न्यषेवि ॥ ४८ ॥

तदेति। तदैव तस्मिन्काल एव काशीनगरोषितः श्रीशंकराचार्यमुनिः धूर्तेन वञ्चकेन श्रीभैरवोपासकभैरवाख्यविप्रेण श्रीभैरवस्य उपासकेन भैरवाख्येन विप्रेण ब्राह्मणेन चिरं बहुकालं न्यषेवि निषेवितः। सेवृसेवायामित्यस्मात्कर्मणि लुङि चिण् ॥ ४८ ॥

बलेः प्रदानादचिरात्प्रसीदे-
च्छ्रीभैरवस्त्वेककपालमूर्ध्नः ।
इत्येवमालोच्य तमस्य मत्वा
ग्रहीतुमेनं समवञ्चयत्सः ॥ ४९ ॥

बलेरिति । श्रीभैरवस्तु एककपालमूर्ध्नः एकं कपालं यस्य सः एककपालः स चासौ मूर्धा च तस्य बलेः प्रदानात् अचिरात् शीघ्रं प्रसीदेत् प्रसन्नो भवेत् इत्येवम् आलोच्य सः भैरवाख्यविप्रः अस्य शंकराचार्यस्य तम् एककपालमूर्धानं मत्वा एनं मूर्धानं ग्रहीतुं समवञ्चयत् सम्यग्वञ्चनमकरोत् ॥ ४९ ॥

शुश्रूषयैवातितरां प्रसन्नं
कदाचिदेनं कठिनाशयः सः ।
दित्से बलिं देशिकभैरवाय
भवच्छिरो मे वितरेत्यवोचत् ॥ ५० ॥

शुश्रूषयेति । शुश्रूषयैव सेवयैव अतितराम् अत्यन्तं प्रसन्नम् एनं शंकराचार्यं कदाचित्कस्मिंश्चित्काले कठिनाशयः कठिनाभिप्रायः सः भैरवाख्य विप्रः हे देशिक गुरो भैरवाय बलिं दित्से दातुमिच्छामि । भवच्छिरः मे मह्यं वितर देहि इत्यवोचत् उक्तवान् ॥

उदारचेता अथ शंकरार्यः
आलोचयद्दिग्विजयं प्रपूर्णम् ।

परोपकाराय शरीरमेत-
त्प्रयात्विति द्रागुररीचकार ॥ ५१ ॥

उदारचेता इति । अथानन्तरं उदारचेताः दानशीलमनाः शंकराचार्यः दिग्विजयं प्रपूर्णम् आलोचयन् सन् परोपकाराय एतत् शरीरं प्रयातु गच्छतु इति द्राक् उररीचकार अङ्गीकृतवान् ॥

नीत्वा स तं निर्जन एव धूर्तो
वने प्रशान्तं निजभैरवेशम् ।
समर्च्य खड्गं निशितं करेण
धृत्वा शिरश्छेत्तुमनाः पुरोऽस्थात् ॥ ५२ ॥

नीत्वेति । धूर्तः वञ्चकः सः भैरवाख्यविप्रः प्रशान्तं तम् आचार्यं निर्जन एव वने नीत्वा निजभैरवेशं निजः स्वकीयः भैरवेशः भैरव एव ईशः तं समर्च्य निशितं तीक्ष्णं खड्गं करेण धृत्वा शिरश्छेत्तुमनाः सन् पुरः अस्थात् स्थितवान् ॥ ५२ ॥

नृसिंहदेवायतने तदैव
ध्यायन्गुरुं चेतसि पद्मपादः ।
विज्ञाय योगात्तदिदं नृसिंहा-
विष्टो रुषास्याशु समीपमाप ॥ ५३ ॥

नृसिंहेति । तदैव तत्काल एव नृसिंहदेवायतने चेतसि हृदि गुरुं ध्यायन् पद्मपादः पद्मपादाचार्यः तदिदम् एतदीयं वृत्तं योगात्

योगदृष्टिसकाशात् विज्ञाय ज्ञात्वा रुषा रोषेण नृसिंहाविष्टः नृसिंहावेशवान् सन् अस्याचार्यस्य समीपम् आशु आप प्राप्तवान् ॥

तेनैव खड्गेन तमेव विप्रं
छित्वा क्षणादस्य पुरो ननर्त ।
कोलाहलत्यक्तसमाधिरेषः
स्तुत्या नृसिंहं व्यतनोत्प्रसन्नम् ॥ ५४ ॥

तेनेति । एषः पद्मपादाचार्यः तेन तत्करधृतेन खड्गेन तमेव विप्रं भैरवाख्यब्राह्मणं छित्वा अस्याचार्यस्य पुरः पुरस्तात् क्षणात् क्षणमात्रात् ननर्त नृत्तं चकार । एषः शंकराचार्यः कोलाहलात् कलकलध्वनिश्रवणात् त्यक्तसमाधिः त्यक्तः समाधिर्येन स तथोक्तः सन् स्तुत्या 'पालय कृपालय नृसिंह नरसिंह' इति श्लोकाष्टकेन प्रसन्नं व्यतनोत् अकरोत् ॥ ५४ ॥

ततस्तयोरद्भुतवृत्तभाजोः
स्तोत्रं वितेने सकलैश्च शिष्यैः ।
तैः साकमागाद्बदरीवनं स
नारायणागारविलोकनाय ॥ ५५ ॥

तत इति । ततस्तदनन्तरम् अद्भुतवृत्तभाजोः विचित्रचरित्रजुषोः तयोः शंकराचार्यपद्मपादाचार्ययोः स्तोत्रं सकलैः शिष्यैश्च वितेने कृतम् । तनोतेः कर्मणि लिट् । तैः शिष्यैः साकं स आ-

चार्यः नारायणागारविलोकनाय पद्मपादाचार्यनिर्मापितनारायणदेवालयविलोकनाय बदरीवनं बदरिकाश्रमम् अगात् ॥ ५५ ॥

संपूज्य नारायणमादरेण
प्रेमोदयामोदितपद्मपादः ।
देवं त्विमं केरललोक एव
संपूजयत्वित्यपि सोऽन्वजानात् ॥ ५६ ॥

संपूज्येति । प्रेमोदयामोदितपद्मपादः प्रेम्णः प्रीतेः उदयेन आमोदितः संतोषितः पद्मपादो येन स तथोक्तः । सः शंकराचार्यः आदरेण नारायणं संपूज्य इमं तु देवं केरललोक एव केरलादागतो जन एव संपूजयतु इति अन्वजानात् अनुज्ञां दत्तवान् ॥ ५६ ॥

ततो नृसिंहायतनं समेत्य
संजातमाकर्ण्य समस्तवृत्तम् ।
माहात्म्यविद्भक्तवरात्स भूपा-
दन्वगृहीद्भूरितरां सपर्याम् ॥ ५७ ॥

तत इति । ततो बदरीवनात् नृसिंहायतनं पूर्वोक्तं नृसिंहमन्दिरं समेत्य समागत्य संजातं समस्तवृत्तम् आकर्ण्य माहात्म्यविद्भक्तवरात् माहात्म्यं वेत्तीति माहात्म्यवित् स चासौ भक्तवरश्च तस्माद्भूपात् भूरितरां अतिशयेन बह्वीं सपर्यां पूजां अन्वग्रहीत् अनुगृहीतवान् ॥

तुष्टस्तया देशिकसार्वभौमः
श्रीचक्ररीत्या नगरं कृतेऽस्य ।

निर्माप्य च श्रीनगरं महात्मा
पट्टाभिषेकं विततान तस्य ॥ ५८ ॥

तुष्ट इति । देशिकसार्वभौमः गुरुचक्रवर्ती तया राजकृतसपर्यया तुष्टः प्रहृष्टः सन् विततं विस्तीर्णम् अस्य कृते इदमर्थे श्रीचक्ररीत्या 'बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलषोडशकर्णिकारम्। वृत्तत्रयं च धरणीपुरवेष्टितं च श्रीचक्रमेतदुदितं परदेवतायाः' इति लक्षणलक्षितया रीत्या श्रीनगरं तन्नामकं पुरं महात्मा महामनाः निर्माप्य कारयित्वा तस्मिन्राज्ञः पट्टाभिषेकं विततान चक्रे ॥ ५८ ॥

संमानितस्तेन स शंकरार्यः
श्रीपद्मपादं मुनिमन्वभाणीत् ।
ऐन्द्र्यां दिशि त्वं निजसंप्रदाय-
प्रवर्तको लोकगुरुर्भवेति ॥ ५९ ॥

संमानित इति । तेन राज्ञा संमानितः सः शंकराचार्यः । ऐन्द्र्यां दिशि पूर्वदिशि निजसंप्रदायप्रवर्तकः निजसंप्रदायः स्वकीयशिष्यपरम्परोपदेशक्रमः तस्य प्रवर्तकः एतत्प्रान्तस्थितसकललोकानां गुरुः त्वं भवेति पद्मपादं मुनिं अन्वभाणीत् अनु लक्षीकृत्य अभाणीत् अवोचत् ॥ ५९ ॥

तदाज्ञया पद्मपदार्ययोगी
चक्रे जगन्नाथमठे निवासम् ।

सुरेश्वराचार्ययतिः पुरैव
तच्छासनादस्ति स शृङ्गपुर्याम् ॥ ६० ॥

तदिति । तदाज्ञया तस्य गुरोराज्ञया पञ्चपदार्थयोगी पद्मपादाचार्यः जगन्नाथमठे निवासं चक्रे चकार । पुरैव पूर्वमेव सुरेश्वराचार्ययतिः तच्छासनात् तस्य शंकराचार्यस्य शासनात् शृङ्गपुर्याम् अस्ति । 'यावत्पुरानिपातयोर्लट्' इति भूतार्थे लट् ॥ ६० ॥

गुरुः स हस्तामलकं यतीन्द्रं
न्ययूयुजत्पश्चिमदिग्विभागे ।
स द्वारकायां न्यवसद्यतीन्द्रो
गुरोर्गिरा चारु मठं विधाप्य ॥ ६१ ॥

गुरुरिति । सः गुरुः शंकराचार्यः हस्तामलकं यतीन्द्रं पश्चिमदिग्भागे न्ययूयुजत् नियोजयामास । स यतीन्द्रः हस्तामलकाचार्यः गुरोर्गिरा द्वारकायां चारु मठं विधाप्य न्यवसत् निवासं कृतवान् ॥ ६१ ॥

तं तोटकाचार्यमथोत्तरस्या-
माज्ञाप्य दिश्याप मुदं स योगी ।
स चोपकण्ठं बदरीवनस्य
ज्योतिर्मठे तद्वचनादवात्सीत् ॥ ६२ ॥

तमिति । अथानन्तरं तोटकाचार्यम् उत्तरस्यां दिशि आज्ञाप्य स योगी शंकराचार्यः मुदं आप प्राप । स च तोटकाचार्यः बद-

रीवनस्य बदरिकाश्रमस्य उपकण्ठं समीपे ज्योतिर्मठे ज्योतिर्नामके मठे तद्वचनात् तस्य गुरोर्वचनात् अवात्सीत् वासं कृतवान् ॥६२॥

**यातुं समादिश्य चतुर्दिशासु**
**यतीश्वरोऽयं चतुरोऽपि शिष्यान् ।**
**सिद्धेश्वरीं सिद्धनुतां दिदृक्षुः**
**चचाल नेपालविशालदेशे ॥ ६३ ॥**

यातुमिति । अयं यतीश्वरः शंकराचार्यः चतुरोऽपि शिष्यान् पद्मपादाचार्यसुरेश्वराचार्यहस्तामलकाचार्यतोटकाचार्यान् चतुर्दिशासु चतसृषु दिक्षु यातुं गन्तुं समादिश्य अनुज्ञाय सिद्धनुतां सिद्धेश्वरीं दिदृक्षुः सन् नेपालविशालदेशे नेपालाख्ये विस्तीर्णे देशे चचाल चलितवान् ॥ ६३ ॥

**स्वाङ्के मुनिं साप्युपवेश्य वाक्यैः**
**सुधोपमैः स्कन्दमिवाममर्श ।**
**सेर्ष्यं समालोक्य स सिद्धसंघ-**
**स्तयोरुपर्येव शिला ववर्ष ॥ ६४ ॥**

स्वाङ्क इति । सापि सिद्धेश्वरी स्वाङ्के स्वस्या अङ्के ऊरुभागोपरि मुनिं शंकराचार्यम् उपवेश्य आसयित्वा स्कन्दमिव षण्मुखमिव सुधोपमैर्वाक्यैः आममर्श परामर्शं चकार । 'मृशविमर्शने' इत्यस्मात् आङ्पूर्वाल्लिट् । सः सिद्धसंघः सेर्ष्यं सासूयं समालोक्य संप्रेक्ष्य तयोरा-

चार्यसिद्धेश्वर्योः उपर्येव सिद्धिमहिम्ना शिलाः ववर्ष । वृष्टिं चकार । 'वृष सेचने' इत्यस्माल्लिट् ॥ ६४ ॥

**तां वृष्टिमस्तंभयदस्य योगी**
**प्रावारयत्ताश्च शिलाः परीताः ।**
**विभाति चाद्यापि तथैव चित्रं**
**व्यर्थश्रमः सिद्धगणो बभूव ॥ ६५ ॥**

तामिति । योगी आचार्यः अस्य सिद्धगणस्य वृष्टिं अस्तम्भयत् स्तम्भनं कृतवान् । परीत परिताः इताः प्राप्ताः ताः शिलाः प्रावारयत् प्रकर्षेण आवारयत् । अद्यापि अस्मिन्दिनेपि तथैव चित्रं विभाति । सिद्धगणः व्यर्थश्रमः बभूव ॥ ६५ ॥

**सिद्धेश्वरीं चारु तदा ययाचे**
**तक्रं पिपासुर्जननीमिवैषः ।**
**आस्फालितात्मोरुरजीजनत्सा**
**तक्रापगां सा प्रथिताधुना सा ॥ ६६ ॥**

सिद्धेश्वरीमिति । तदा एष आचार्यः सिद्धेश्वरीं प्रति पिपासुः पातुमिच्छुः सन् जननीमिव मातरमिव चारु तक्रं ययाचे याचितवान् । सा सिद्धेश्वरी आस्फालितात्मोरुः आस्फालिता आत्मोरुः स्वीयाङ्कभागः यया सा तथोक्ता सती तक्रापगां तक्रनदीम् अजीजनत् जनयामास । अधुनापि इदानीमपि सा तक्रापगा प्रथिता प्रसिद्धा अस्तीति शेषः ॥ ६६ ॥

मत्वा यतीन्द्रः कृतकृत्यभावं
महत्समाभाषणमाप्तुकामः ।
स्वच्छन्दचारी मुनिराजदत्ता-
त्रेयस्य रम्याश्रममाजगाम ॥ ६७ ॥

मत्वेति । यतीन्द्रः शंकराचार्यः कृतकृत्यभावं कृतानि कृत्यानि परमतनिरसनपूर्वकम् अद्वैतसिद्धान्तस्थापनादीनि येन स तथोक्तः तस्य भावं मत्वा महत्समाभाषणं महद्भिः सह सम्यगालापम् आप्तुकामः प्राप्तुकामः स्वच्छन्दचारी स्वच्छन्दं चरति तच्छीलः सन् मुनिराजदत्तात्रेयस्य रम्याश्रमं जगाम आगतवान् । दत्तात्रेय इत्यत्र पादान्तविच्छेददोषस्तु न शङ्क्यः । 'पूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवत् द्रष्टव्यो यानि चिन्तायां यथादेशः परादिवत्' इति च्छन्दोभाष्यवचनात् । 'दिक्कालाद्यनवच्छिन्नानन्त चिन्मात्रमूर्तये' इति उदाहरणं च ज्ञेयम् ॥ ३७ ॥

औकं समस्तान्यपि पुस्तकानि
शिष्यान्समस्तानपि तानमुञ्चम् ।
आस्तामिमौ दण्डकमण्डलू चे-
त्यालोच्य तत्याज स तौ च योगी ॥ ६८ ॥

औकमिति । अहं समस्तान्यपि पुस्तकानि औकं त्यक्तवानस्मि । 'उक उत्सर्गे' इत्यस्माल्लङ् उत्तमपुरुषैकवचनम् । अशेषान् तान् शिष्यानपि अमुञ्चम् मुक्तवानस्मि । इमौ दण्डकमण्डलू

आस्ताम् अवर्तेताम् । अस्तेर्लङि प्रथमपुरुषद्विवचनम् । 'अ-स्त्रीकमण्डलुः कुण्डी' इत्यमरः । इत्यालोच्य तौ च दण्डकमण्डलू अपि स योगी शंकराचार्यः तत्याज त्यक्तवान् ॥ ६८ ॥

दण्डो द्रुरूपेण स पर्यणंसी-
तीर्थात्मना चाम्बु कमण्डलुस्थम् ।
महात्मनो हस्तपरिग्रहेण
जडौ च तौ सार्थतनू अभूताम् ॥ ६९ ॥

दण्ड इति । स दण्डः द्रुरूपेण वृक्षरूपेण कमण्डलुस्थम् अम्बु च तीर्थात्मना पर्यणंसीत् परिणामं प्रापत् । तथा हि महात्मनो हस्त-परिग्रहेण जडावपि तौ सार्थतनू अभूताम् ॥ ६९ ॥

दत्तात्रेयं भुवनविनुतं वीक्ष्य नत्वा न्यगादी-
द्वृत्तं स्वीयं सकलमपि तान्प्रेषितान्दिक्षु शिष्यान् ।
सोऽपि श्रुत्वा मुनिपतिरदादाशिषो विश्वरूपा-
चार्यादिभ्यः सुखमवसतां तत्र तौ भाषमाणौ ॥

इति श्रीमत्परमहंसपरिव्राजकादिश्रीमन्नृसिंहभारतीकरकमल-
संजातसकलविद्याविशारदपण्डितपुण्डरीकमण्डली-
मार्ताण्डश्रीमत्सच्चिदानन्दभारतीस्वामिभिर्निर्मा-
पिते विद्वद्बालकश्रीमत्काशीलक्ष्मणशास्त्रि
विरचिते गुरुवंशे महाकाव्ये

तृतीयः सर्गः ॥

दत्तात्रेयमिति । भुवनविनुतं भुवनेषु त्रिषु लोकेषु विनुतं साक्षान्महाविष्णुरिति प्रशंसितं दत्तात्रेयं दत्तश्चासावात्रेयश्च अत्रेरपत्यं पुमानात्रेयः । 'इतश्चानिञः' इति इकारान्तात्' द्व्यचः अपत्ये ढक् । स च विष्णुना स्वांशत्वेन दत्तः । तथोक्तं दत्तात्रेयं वीक्ष्य आलोक्य नत्वा नमस्कृत्य सकलमपि स्वीयं वृत्तं चरित्रं दिक्षु प्रेषितान् तान् शिष्यानपि न्यगादीत् अवोचत् । सोऽपि दत्तात्रेयोऽपि मुनिपतिर्विश्वरूपाचार्यादिभ्यः आशिषः अदात् दत्तवान् । तत्र माहुरीपुरे भाषमाणौ संजल्पन्तौ तौ दत्तात्रेयशङ्कराचार्यौ चिरं बहुकालम् अवसतां उषितवन्तौ । मन्दाक्रान्तावृत्तम् । 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति लक्षणात् ॥ ७० ॥

इति गुरुवंशव्याख्यायां भावबोधिन्यां

तृतीयः सर्गः ॥



## चतुर्थः सर्गः ॥

—*—

अथास्य लोकैकगुरोरनुज्ञया
सुरेश्वराचार्ययतीश्वरो महान् ।
स तुङ्गभद्रातटिनीतटे मठे
जगत्प्रतीते जयकृच्चिरं बभौ ॥ १ ॥

त्रिभिः सर्गैः शंकराचार्यचरित्रं सर्वमुक्त्वास्मिन्सर्गे दक्षिणदिगवस्थितसुरेश्वराचार्यादिगुरुपरंपराचरित्राणि वर्णयितुकामः पञ्चभिः श्लोकैः सुरेश्वराचार्यमभिदधाति—

अथेति । अथानन्तरं लोकैकगुरोः लोकानां जनानामेको मुख्यो गुरुः तस्य अनुज्ञया निदेशेन जयकृत् महान् सुरेश्वराचार्यः यतीश्वरः सः तुङ्गभद्रातटिनीतटे जगत्प्रतीते जगत्प्रसिद्धे मठे चिरं बभौ । 'भा दीप्तौ' लिट् । वंशस्थवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

सुमानसोल्लासकृते विनिर्ममे
समानसोल्लासमुखा बह्वीः कृतीः ।
सुरेश्वराचार्यसमानतां ततः
सुरेश्वराचार्ययतीश्वरो दधे ॥ २ ॥

सुमानसोल्लासेति । सः सुरेश्वराचार्ययतीश्वरः सुमानसोल्लासकृते सुमानसाः प्रशस्तहृदयाः तेषाम् उल्लासकृते उल्लासार्थं मानसोल्लासमुखाः मानसोल्लासाख्यग्रन्थो मुखम् आदिर्यासां ताः तथोक्ता बह्वीः कृतीः ग्रन्थान्विनिर्ममे चकार । विनिपूर्वात् 'माङ्माने शब्दे च' इत्यस्माल्लिट् । ततस्तस्मात्कारणात् सुरेश्वराचार्यसमानतां सुरेश्वराचार्येण देवेन्द्रगुरुणा बृहस्पतिना समानतां साम्यं दधे धृतवान् । दधातेः कर्तरि लिट् ॥ २ ॥

परात्मनः शास्त्रगविश्वरूपता-
मबोधयद्बोध्यनिबोधको मुहुः ।
मनीषिलोकान्सुमनीषितां ततो
नाम्नापि संप्राप स विश्वरूपताम् ॥ ३ ॥

परात्मन इति । बोध्यनिबोधकः बोधयितुमर्हं बोध्यम् उपनिषद्गीतावेदान्तशास्त्रादि, तस्य निबोधकः नितरां बोधयिता सः विश्वरूपाचार्यः मनीषिलोकान्प्रति विद्वज्जनान्प्रति सुमनीषिता सुष्ठु मनीषिता अभीष्टा तां परात्मनः परमात्मनः शास्त्रगविश्वरूपतां शास्त्रं वेदान्तशास्त्रं तद्गच्छतीति शास्त्रगा विश्वरूपता सर्वात्मकता तां मुहुः पुनः अबोधयत् बोधितवान् । ततस्तस्मात्कारणात् नाम्नापि अभिधेयेनापि विश्वरूपतां विश्वरूपनामवत्त्वं संप्राप संप्राप्तवान् । अपिशब्देन साक्षात्कारसिद्धा सर्वात्मकता प्रतीयते । वृत्तं तु वंशस्थेन्द्रवंशयोरुपजातिः । तदुक्तं छन्दःसुधाकरे— 'भवेत्तु वंशस्थमिदं जतौ जरौ स्यादिन्द्रवंशा ततजा रसंयुताः । द्वाभ्यां किलाभ्यामुप-

जातयः स्युस्तथैव जात्यन्तरमिश्रणेन । रथोद्धतास्वागतयोस्तथेन्द्रवंशाख्यवंशस्थकयोः पदां च' इति ॥ ३ ॥

**बभौ सदानन्दनवाञ्शतक्रतु-**
**र्महीसुरेशः सुरभिश्रिया युतः ।**
**मनोहरश्रीकरकल्पभूरुहः**
**सहस्रदृष्टिः सुचिरं सुरेन्द्रवत् ॥ ४ ॥**

बभाविति । सदानन्दनवान् सतां आनन्दनं संतोषणं तद्वान् । अन्यत्र सदा सर्वदा नन्दनवान् नन्दनाख्योद्यानवान् शतक्रतुः शतं क्रतवो यस्मात्स तथोक्तः तत्कारयितेत्यर्थः । अन्यत्र शतं क्रतवः अश्वमेधाख्याः यस्य स तथोक्तः । महीसुरेशः । महीसुराः ब्राह्मणाः तेषामीशः । अन्यत्र मही महवान् । 'मह उद्धव उत्सवः' इत्यमरः । सुराणामीशः सुरेशः । सुरभिश्रिया मनोहरलक्ष्म्या अन्यत्र सुरभिः कामधेनुः तस्याः श्रिया संपदा युतः युक्तः । 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । सुगन्धौ च मनोज्ञे च' इति विश्वः । मनोहरश्रीकरकल्पभूरुहः मनोहरा श्रीर्लक्ष्मीर्यस्मात् स तथोक्तः कर एव कल्पभूरुहः कल्पवृक्षः मनोहरश्रीः करकल्पभूरुहो यस्य स तथोक्तः । अन्यत्र मनोहराः श्रीकराः शोभाकराः कल्पभूरुहा यस्य स तथोक्तः । 'श्रीर्वेषरचना शोभा भारती सरळद्रवे । लक्ष्म्यां त्रिवर्गसंपत्तौ रसोपकरणेऽपि च' इति विश्वः । सहस्रदृष्टिः सहस्रेषु अनुग्राह्येषु दृष्टिर्दर्शनं यस्य स तथोक्तः । अन्यत्र सहस्रं दृष्टयो यस्य स तथोक्तः । सः सुरेश्वराचार्यः सुरेन्द्रवत् देवेन्द्रेण तुल्यं बभौ ।

'भा दीप्तौ' इत्यस्माल्लट् । श्लेषमूलोपमालंकारः ॥ ४ ॥

चिरं व्यवस्थाप्य विचारकोविदो
वर्णाश्रमाचारविधीन्सुधीनुतः ।
अन्वग्रहीच्छात्रवरं विचक्षणं
मुनीश्वरो बोधघनाभिधं मुनिम् ॥ ५ ॥

चिरमिति । विचारकोविदः विचारे तत्तदाचाराणां परामर्शे कोविदः प्रौढः सुधीनुतः सुधीभिः प्रौढैर्नुतः मुनीश्वरः सुरेश्वराचार्यः वर्णाश्रमाचारविधीन् वर्णाः ब्राह्मणादयः आश्रमाः ब्रह्मचर्यादयः तेषामाचारविधीन् आचारप्रकारान् चिरं व्यवस्थाप्य नियम्य विचक्षणमत्यन्तचतुरं बोधघनाभिधं बोधघन इत्यभिधा यस्य स तथोक्तं मुनिं मननशीलं छात्रवरं शिष्यवर्यम् अन्वग्रहीत् अनुगृहीतवान् ॥

पराशराद्व्यास इवाधिकं बभौ
सुरेश्वराचार्ययतीश्वरादयम् ।
विराजितां बोधघनाभिधां स्विकां
धरातलेऽन्वर्थतया व्यभासयत् ॥ ६ ॥

पराशरादिति । पराशरात् पराशरमुनेः व्यास इव सुरेश्वराचार्ययतीश्वरात् अयं बोधघनाचार्यः अधिकं बभौ । विराजितां स्विकां स्वकीयाम् 'भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि' इति इत्वम् । बोधघनाभिधां बोधघन इत्यभिधानं धरातले भूतले अन्वर्थतया अनुगतः बोधः ज्ञानं घनः निबिडो यस्येत्यर्थः, तद्वत्तया व्यभासयत् विभासितवान् ॥ ६ ॥

दिनान्यनेकानि विनीय मौनिराट्
सनातनं स्वानुभवं प्रकाशयन् ।
भजज्जनाभीष्टदपूर्णवैभवो
निजे पदे ज्ञानघनं न्यवासयत् ॥ ७ ॥

दिनानीति । भजज्जनाभीष्टदपूर्णवैभवः भजतां जनानामभीष्टदं पूर्णवैभवं यस्य स तथोक्तः । मौनिराट् मौनिराजः बोधघनाचार्यः सनातनं सदातनम् 'सायंचिरम्—' इत्यादिना ट्युप्रत्ययस्तुडागमश्च । स्वानुभवं स्वं स्वकीयमनुभवं साक्षात्कारं प्रकाशयन् सन् अनेकानि दिनानि विनीय नीत्वा निजे पदे स्वकीये स्थाने ज्ञानघनं ज्ञानघनाचार्यनामानं शिष्यं न्यवासयत् निवासितवान् । निपूर्वकाद्वसेर्हेतुमण्णिजन्ताल्लङ् ॥ ७ ॥

अनारतज्ञानघनोक्तिशोभितः
पिनाकिनः पूजनमाचरंश्चिरात् ।
जनार्दनादीनपि मानयन्सुरा-
न्निनाय सद्धर्मपथं जनानयम् ॥ ८ ॥

अनारतेति । अनारतं निरन्तरं ज्ञानघनाभिः ज्ञानसान्द्राभिः उक्तिभिः शोभितः अयं ज्ञानघनाचार्यः पिनाकिनः शिवस्य पूजनं चिरात् बहुकालम् आ चरन् कुर्वन् सन् जनार्दनादीनपि विष्ण्वादीनपि सुरान् मानयन् संमानयन् सद्धर्मपथं सन् प्रशस्तो यो धर्मः तस्य पन्थाः तम् । 'ऋक्पूरब्धूः' इत्यादिना समासान्तः अप्रत्ययः ।

जनान् निनाय प्रापयामास । 'कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्' इति द्विकर्मकत्वम् ॥ ८ ॥

ज्ञानोत्तमोपेतशिवाभिधानकं
सोऽन्वग्रहीच्छिष्यवरं विचार्य तम् ।
ज्ञानेन साधूत्तमतामवाप्तवा-
न्ध्यानेन साक्षाच्छिवरूप एव यः ॥ ९ ॥

ज्ञानोत्तमेति । सः ज्ञानघनाचार्यः विचार्य यः वक्ष्यमाणः ज्ञानेन उत्तमताम उत्तमत्वं साधु सुष्ठु अवाप्तवान् । ध्यानेन अभेदप्रत्ययैकतानतया साक्षात्प्रत्यक्षं शिवरूप एव अभूदिति शेषः । ज्ञानोत्तमोपेतशिवाभिधानकं ज्ञानोत्तमेन ज्ञानोत्तमशब्देन । शब्दपरत्वरीतिः प्रागुक्ता । उपेतं शिवाभिधानं यस्य स तथोक्तः । शैषिकः कप्रत्ययः । तं शिष्यवरम् अन्वग्रहीत् अनुगृहीतवान् ॥ ९ ॥

शिष्योत्तमं ज्ञानगिरिं महामनाः
स आददे सर्वजनानुकम्पिनम् ।
छात्रावगाह्योत्तमबोधवाग्झरी-
विलासमूलं स मुनिर्बभौतमाम् ॥ १० ॥

शिष्योत्तममिति । महामनाः स मुनिः ज्ञानोत्तमशिवाचार्यः सर्वजनानुकम्पिनं सर्वाञ्जनाननुकम्पते तच्छीलः सर्वजनानुकम्पी तं शिष्योत्तमं ज्ञानगिरिं ज्ञानगिरिनामानमाददे आत्तवान् छात्रावगाह्योत्तमबोधवाग्झरीविलासमूलं छात्रैः अवगाह्यः आलोडनीयः उत्तमबो-

षाय उत्कृष्टज्ञानार्थं याः वाचस्तासां झर्याः निर्झरस्य यो विलासस्तस्य मूलं कारणं स मुनिः ज्ञानगिर्याचार्यः बभौतमाम् अतिशयेन बभौ । ‘अतिशायने तमबिष्ठनौ’ ‘तिङश्च’ इति विहिततमप्प्रत्ययान्तात् ‘किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे’ इति आमूप्रत्ययः ॥

बभूव तस्याथ कराम्बुजोद्भवो
गुणाचलः सिंहगिरीतिनामवान् ।
विद्वन्मृगेन्द्रैर्जितवादिकुञ्जरो
विद्यामणीरोहण एष भुव्यभात् ॥ ११ ॥

बभूवेति । अथ अनन्तरं तस्य ज्ञानगिर्याचार्यस्य कराम्बुजोद्भवः करकमलादुद्भवो यस्य सः तथोक्तः गुणाचलः गुणानामचलः पर्वतः सिंहगिरीतिनामवान् बभूव । विद्वन्मृगेन्द्रैः विद्वांस एव मृगेन्द्राः सिंहाः तैर्जिताः वादिन एव कुञ्जराः येन स तथोक्तः एषः सिंहगिर्याचार्यः विद्यामणीरोहणः विद्या एव मणयः तासां रोहणः रोहणपर्वतः सन् भुवि भूमौ अभात् ॥ ११ ॥

चिरं जनान्धर्मपथे नियन्त्रय-
न्सोऽन्वग्रहीदीश्वरतीर्थयोगिनम् ।
यदीश्वरोऽयं सुकृतप्रवर्तने
तीर्थात्मकोऽभूदपि लोकपावने ॥ १२ ॥

चिरमिति । सः सिंहगिर्याचार्यः धर्मपथे धर्ममार्गे जनान् लोकान् चिरं बहुकालं नियन्त्रयन् नियमयन् सन् ईश्वरतीर्थयोगिनं

तन्नामक योगिनं शिष्यमिति शेषः । अन्वग्रहीत् अनुगृहीतवान् । यद्यस्मात्कारणात्सुकृतप्रवर्तने धर्माचरणे अयं पूर्वोक्तः ईश्वरः लोकपावने जनपवित्रीकरणे तीर्थात्मकोऽपि तीर्थस्वरूपोऽपि अभूत् तस्मादीश्वरतीर्थसंज्ञामकार्षीदिति भावः ॥ १२॥

तदीयहस्ताम्बुजसंभवो बभौ
नृसिंहतीर्थाह्वयदेशिकोत्तमः ।
हंसस्थितिश्रीश्चतुराननः स्वयं
विरिञ्चिवद्वैदिकमार्गपालकः ॥ १३ ॥

तदीयेति । नृसिंहतीर्थाह्वयदेशिकोत्तमः नृसिंहतीर्थ इत्याह्वयो यस्य स तथोक्तः स चासौ देशिकोत्तमश्च स तथाभूतः तदीयहस्ताम्बुजसंभवः तदीयात् ईश्वरतीर्थसंबन्धिनः हस्ताम्बुजात्करकमलात् संभवो यस्य स तथोक्तः विरिञ्चिवत्कमलासनवत् हंसस्थितिश्रीः हंसे परब्रह्मणि स्थितिर्निष्ठा सैव श्रीर्यस्य स तथोक्तः । अन्यत्र हंसे हंसपक्षिणि स्थितिश्रीः अवस्थानसंपद्यस्य स तथोक्तः हंसवाहन इत्यर्थः । चतुराननः चतुरं चातुर्यशालि आननं मुखं यस्य स तथोक्तः । वैदिकमार्गपालकः वेदमधीयते विदन्ति वा वैदिकाः 'तदधीते तद्वेद' इत्यधिकारे वसन्तादित्वात् वेदशब्दात् ठक् । तेषां मार्गः आचरणं तस्य पालकः सन् स्वयं बभौ भाति स्म । श्लेषमूलोपमा ॥

जित्वा सर्वान्वादिलोकान्मतं स्वं
प्रोद्धास्योर्व्यां सोऽनुजग्राह शिष्यम् ।

श्रीमान्विद्यातीर्थसंज्ञं यतीन्द्रं
छात्रस्तोमैः सेवितं कीर्त्तिसान्द्रम् ॥ १४ ॥

जित्वेति । सः नृसिंहतीर्थाचार्यः सर्वान्वादिलोकान् वादिजनान् जित्वा उर्व्यां स्वं मतं प्रोद्धास्य प्रकाश्य श्रीमान् सन् छात्रस्तोमैः शिष्यसमूहैः सेवितं कीर्त्तिसान्द्रं कीर्त्तिभिर्निबिडं विद्यातीर्थसंज्ञं विद्यातीर्थनामानं यतीन्द्रं शिष्यम् अनुजग्राह अनुगृहीतवान् । शालिनीवृत्तम् । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति ॥ १४ ॥

भूमौ धर्मोद्धारको भूरिकालं
व्याचक्षाणः सर्वशास्त्राण्यथैषः ।
स्तुत्यो नित्यं भासुरैर्भूसुरेन्द्रै-
र्नीतिप्राज्यं योगराज्यं शशास ॥ १५ ॥

भूमाविति । भूमौ धर्मोद्धारकः धर्मस्य उद्धर्ता सर्वशास्त्राणि सर्वाणि समस्तानि शास्त्राणि प्रागुक्तलक्षणानि व्याचक्षाणः व्याख्यानशीलः व्याङ्पूर्वात् 'चक्षिङ् व्यक्तायां वाचि' इत्यस्मात् 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश्प्रत्ययः । भासुरैः प्रकाशमानैः भूसुरेन्द्रैः भूसुराणां ब्राह्मणानाम् इन्द्राः पूजिताः श्रेष्ठा इति यावत् । 'इन्द्रो वृषात्मशुक्रार्केष्वीश्वरे पूजिते गुरौ' इति वैजयन्ती । तैर्नित्यं स्तुत्यः स्तोतव्यः 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यप् । एषः विद्यातीर्थाचार्यः नीतिप्राज्यं नीतयः प्राज्याः बहवः यस्मिंस्तत्तथोक्तं योगराज्यं योग एव राज्यं राज्ञः कर्म

भावो वा राज्यम् 'पत्यन्तपुरोहितादिभ्यो यक्' इति पुरोहितादिगणस्य 'राजासे' इति गणसूत्रात् अत्र भावार्थे यक् । भूरिकालं बहुकालं शशास विविच्य बोधयामास ॥ १५ ॥

प्रौढोऽभैत्सीद्वादिशैलेन्द्रपक्षा-
न्स्फूर्जच्छात्रप्राज्ञवाग्वज्रसंघैः ।
सोऽयं भूमीनिर्जरेन्द्रो नितान्तं
न स्यात्कस्याभिज्ञलोकस्य मान्यः ॥ १६ ॥

प्रौढ इति । प्रौढः स विद्यातीर्थाचार्यः । स्फूर्जच्छात्रप्राज्ञवाग्वज्रसंघैः स्फूर्जद्भिः छात्रप्राज्ञानां वाच एव वज्राणि तेषां संघैः वादिशैलेन्द्रपक्षान् वादिन एव शैलेन्द्राः तेषां पक्षान् साधनीयार्थान् । अन्यत्र गरुतः 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । अभैत्सीत् विदारितवान् । 'भिदिर्विदारणे' इत्यस्माल्लुङि सिचि वृद्धिः । भूमीनिर्जरेन्द्रः अयमाचार्यः नितान्तमतिशयेन कस्याभिज्ञलोकस्य विद्वज्जनस्य मान्यः पूज्यो न स्यात् । अपि तु सर्वस्येति भावः ॥ १६ ॥

पादौ यस्य च्छत्त्रवज्रध्वजाद्य-
प्रोद्यद्रेखौ चिन्तयन्तोऽपि सन्तः ।
राजन्त्येकच्छत्रसाम्राज्यवन्तः
किं तद्वर्ण्यं राजमान्यत्वमस्य ॥ १७ ॥

पादाविति । छत्रवज्रध्वजाद्यप्रोद्यद्रेखौ च्छत्त्रवज्रध्वजा आद्या

यामां तास्तथोक्तास्तदाकाराः प्रोद्यन्त्यो रेखाः ययोस्तौ तथोक्तौ यस्य विद्यातीर्थाचार्यस्य पादौ चरणौ । तथा च सामुद्रिकशास्त्रे— 'ध्वजवज्राङ्कुशच्छत्रं शङ्खपद्मदलं तले । पाणिपादेषु यस्यास्ति स नरः पृथिवीपतिः' इति । चिन्तयन्तोऽपि सन्तः साधवः । 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हितेऽपि सत्' इत्यमरः । एकच्छत्रसाम्राज्यवन्तः एकं छत्रं यस्य तत्तथोक्तं सम्राजो भावः साम्राज्यं तदेषामस्तीति तद्वन्तः सन्तः । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । राजन्ति दीप्यन्ते । तादृशाश्च नरपत्यादयः । तत्तस्मात्कारणादस्याचार्यस्य राजमान्यत्वं राजपूज्यता वर्ण्यं वर्णयितुं शक्यं किम् । 'किं पृच्छायाम्' इत्यमरः । यत्पादसंचिन्तनेनापि एकच्छत्रसाम्राज्यरूपसर्वपृथ्वीश्वरत्वस्य लाभस्तादृशस्यास्य राजपूज्यत्वं किं स्तोतव्यमिति भावः ॥ १७ ॥

**पारम्पर्येणाध्वरानादधानैः**
**शिष्यैरस्य प्राप शक्रोऽपि साम्यम् ।**
**कामं सोमं प्राप्तुमत्रैव यस्मा-**
**दासीद्वासी सोऽपि साकं स्वलोकैः ॥१८॥**

पारम्पर्येणेति । शक्रोऽपि इन्द्रोऽपि पारम्पर्येण परम्परया । स्वार्थे ष्यञ् । अध्वरान्क्रतूनादधानैः कुर्वाणैः अस्य विद्यातीर्थाचार्यस्य शिष्यैः साम्यं सादृश्यं प्राप । यस्मात्कारणात् सोऽपि शक्रः कामं यथेष्टं सोमं हविर्विशेषं प्राप्तुं स्वलोकैः स्वकीयजनैः अग्न्यादिभिः साकम् अत्रैव अस्मिन्देशे एव वासी वासवान् आसीत्

अभवत् ॥ १८ ॥

मन्त्रांस्तन्त्राण्यत्र यन्त्राणि मन्ता
ध्याता प्रीतां सारदां शारदाम्बाम् ।
हृद्यं विद्यातीर्थनामाप सोऽयं
नानार्थो यत्तीर्थशब्दोऽन्वितार्थः ॥ १९ ॥

मन्त्रानिति । मन्त्रान् प्रणवादीन् तन्त्राणि चतुःषष्टितन्त्राणि अन्यानि च । अत्र एषु स्थितानि तन्त्राणि च मन्ता ज्ञाता सारदां सारं बलं ददातीति सारदाम् । 'सारो बले स्थिरांशे च' इत्यभिधानात् । प्रीतां तुष्टां शारदाम्बां ध्याता ध्यायन् सः विद्यातीर्थाचार्यः हृद्यं हृदयंगमं विद्यातीर्थनाम आप प्राप । यद्य-स्मात्कारणात् नानार्थः नाना अनेके अर्था यस्य सः तथोक्तः । अयं तीर्थशब्दः अन्वितार्थः अन्विताः अर्थाः यस्य स तथोक्तः । प्रकरणादनेनेति मन्तव्यते । अभूदिति शेषः ॥ १९ ॥

श्रीमांस्ततः सिंहगिरौ मुनीश्वरः
पुरा तदाख्यानयतीन्द्रसेविते ।
तपोवने मौनिघनेऽतिपावने
तेने तपो रौप्यगिराविवेश्वरः ॥ २० ॥

श्रीमानिति । ततः तदनन्तरं श्रीमान् कान्तिमान् मुनीश्वरः विद्यातीर्थाचार्यः पुरा पूर्वं तदाख्यानयतीन्द्रसेविते सिंहगिरौ तन्नाम्नि पर्वते मौनिघने ऋषिनिबिडे अतिपावने अत्यन्तं पावने तपोवने रौप्य-

गिरौ रजताद्रौ ईश्वरः शिव इव तपस्तेने चक्रे। वृत्तं तु प्रागुक्तम् ॥

अथैतच्छिष्यचरित्राणि वर्णयितुकामः तद्वृत्तान्तं वक्तुमुपक्रमते—

अत्रान्तरे सुरुचिरैकशिलानगर्यां
कस्यापि भूसुरवरस्य सुतौ विनीतौ ।
दस्राविव प्रतिदिनप्रचुरानुरागौ
ख्यातौ गुणैश्च बलरामहरी इवास्ताम् ॥

**अत्रेति** । अत्रान्तरे अस्मिन्नवसरे सुरुचिरैकशिलानगर्यां सुरुचिरायां मनोहरायाम् एकशिलानगर्याम् एकशिलाख्यायां पुर्यां कस्यापि भूसुरवरस्य ब्राह्मणश्रेष्ठस्य विनीतौ विनयवन्तौ सुतौ दस्राविव अश्विनीकुमाराविव प्रतिदिनप्रचुरानुरागौ प्रतिदिनं दिने दिने प्रचुरः बहुलः अनुरागः प्रीतिर्ययोस्तौ तथोक्तौ सन्तौ गुणैर्गाम्भीर्यविवेकाविद्यादिभिः ख्यातौ प्रसिद्धौ च सन्तौ बलरामहरी इव बलभद्रश्रीकृष्णाविव आस्ताम् अभूताम् । वसन्ततिलकावृत्तमुक्तम् ॥ २१ ॥

विद्वांस्तयोरपि विरागभरात्कनीयां-
स्तीर्थेक्षणोत्सुकमनाः प्रचरन्पृथिव्याम् ।
तीर्थात्मकोन्नततपस्विवरेण्यविद्या-
तीर्थाभिधानमुनिराजसमीपमागात् ॥ २२ ॥

**विद्वानिति** । तयोरपि एतादृशस्नेहभाजोरपि मध्ये विद्वान्प्राज्ञः कनीयान् अनुजः विरागभरात् वैराग्यातिशयात् तीर्थेक्षणोत्सुक-

मनाः तीर्थानामीक्षणे दर्शने उत्सुकमुद्युक्तं मनो यस्य स तथोक्तः । पृथिव्यां चरन् सन् तीर्थात्मकोन्नततपस्विवरेण्यविद्यातीर्थाभिधानमुनिराजसमीपं तीर्थात्मकस्य तीर्थस्वरूपस्य उन्नतेषु प्रकृष्टेषु तपस्विषु वरेण्यस्य श्रेष्ठस्य विद्यातीर्थाभिधानस्य मुनिराजस्य समीपम् आगात् आगतवान् ॥ २२ ॥

अथ त्रिभिः श्लोकैर्दर्शनगोचरं विद्यातीर्थमुनिं विशिनष्टि—

निर्जेतारं षड्रिपुवर्गान्कुनिसर्गा-
न्संधातारं चेतसि मैत्र्याद्यनुभावान् ।
निर्भेत्तारं क्लेशविशेषान्बहुदोषा-
न्निर्णेतारं मुख्यमहावाक्यगभावान् ॥ २३ ॥

निर्जेतारमिति । कुनिसर्गान् कुत्सितः निसर्गः स्वभावो येषां ते तथोक्तान् रिपुवर्गान् कामक्रोधलोभमोहमदमत्सरान् प्रसिद्धान् निर्जेतारं निर्जयशीलं चेतसि चित्ते मैत्र्याद्यनुभावान् मैत्री आदिर्येषां ते मैत्र्यादयः ते च ते अनुभावाश्च तान् 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' इति योगशास्त्रोक्तान् । ते च चित्तवृत्तिविशेषाः सुखिषु मैत्री, दुःखिषु करुणा, पुण्यवत्सु मुदिता, पापिषूपेक्षा चेति । संधातारं संधानशीलं बहुदोषान् बहवो दोषा येषां ते तथोक्तान् क्लेशविशेषान् अविद्यास्मितारागद्वेषाभिनिवेशाख्यान् । अनित्येषु नित्यत्वाभिमानः अनात्मनि देहेन्द्रियादावात्मधीरित्यादिभ्रमोऽविद्या । अस्मिता अहंकारः । रागोऽभिमतविषयाभिलाषः । द्वेषोऽनभिमतविषयेषु रोषः । अभिनि-

वेशः कार्याकार्येष्वाग्रहः। ते च क्लिश्यन्तीति क्लेशाः। तेषां विशेषान्। तथा च योगसूत्राणि— 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या। दृग्दर्शनशक्त्योरेकात्मतेवास्मिता। सुखानुशयी रागः। दुःखानुशयी द्वेषः। स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः। ते प्रतिप्रसवहेयाः सूक्ष्माः' इति। निर्भेत्तारं निःशेषविदारणशीलं मुख्यमहावाक्यगभावान् महावाक्यानि तत्त्वमस्यादीनि तानि गच्छन्ति प्राप्नुवन्तीति महावाक्यगाः मुख्यान्महावाक्यगान्भावान् अभिप्रायान्निर्णेतारं निर्णयशीलं तं स ददर्शेति तृतीयश्लोकस्थेनान्वयः। मत्तमयूरं वृत्तम्, 'वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्' इति लक्षणात्॥ २३॥

**जापं जापं सिद्धिदमन्त्रानुरुयन्त्रां-**
**स्तापं तापं भूरितपांसि प्रयशांसि।**
**वारं वारं शंभुपदाम्भोरुहपूजां**
**कारं कारं तापसधर्मैर्विजितोर्मिम्॥ २४॥**

जापमिति। उरुयन्त्रान् उरूणि बहूनि यन्त्राणि येषां ते तथोक्तास्तान् सिद्धिदमन्त्रान् सिद्धिं ददतीति सिद्धिदाः ते च ते मन्त्राश्च तान् जापं जापं जप्त्वा जप्त्वा प्रयशांसि प्रकृष्टं यशो येभ्यस्तानि तथोक्तानि तपांसि तापं तापं तप्त्वा तप्त्वा शंभुपदाम्भोरुहपूजां शंभोः पदाम्भोरुहयोः पूजां कारं कारं कृत्वा कृत्वा। 'जप जल्पव्यक्तायां वाचि' 'तप संतापे' 'डुकृञ् करणे' एभ्यः 'आभीक्ष्ण्ये णमु-

ल्च ' इति णमुल् । ' नित्यवीप्सयोः ' इति द्वित्वम् । तापसधर्मैः इन्द्रियजयादिभिः विजितोर्मिं विजिताः ऊर्मयः क्षुत्पिपासादयो येन स तथोक्तः तम् ॥ २१ ॥

काले काले स्वाश्रमकर्माण्यपि धर्मा-
न्सर्वानुर्व्यां कारयितारं सविचारम् ।
ध्यायं ध्यायं ब्रह्म परं तत्स निरन्तं
लीनं नूनं शान्तरसे तं च ददर्श ॥ २५ ॥

काल इति । उर्व्यां भूमौ स्वाश्रमकर्माणि सुष्ठु प्रशस्तानि आश्रमकर्माणि ब्रह्मचर्याद्याश्रमविहितकर्माणि धर्मानपि पूर्तादीन् । काले काले सविचारं विचारेण सह सर्वाञ्जनान्कारयितारं निरन्तम् अनन्तं तत्परं ब्रह्म ध्यायं ध्यायं ध्यात्वा ध्यात्वा शान्तरसे नूनं निश्चयेन लीनं श्लिष्टं तं विद्यातीर्थाचार्यं सः विद्वान्ददर्श दृष्टवान् । चशब्दः क्रियासमुच्चये ॥ २५ ॥

नमोऽस्तु भवते गुरो नतजनेप्सितद्योतरो
नमो वरतपोनिधे नुतगुणानुकम्पाम्बुधे ।
समीक्ष्य समुपागतं सपदि मां त्वदेकाश्रितं
समुद्धर महामते परशिवप्रसन्नाकृते ॥ २६ ॥

नम इति । नतजनेप्सितद्योतरो नतजनानाम् ईप्सितेषु द्योतरो कल्पवृक्ष हे गुरो भवते नमोऽस्तु । नुतगुण । नुताः स्तुताः गुणाः यस्य तस्य संबोधनम् । अनुकम्पाम्बुधे दयासागर हे वरतपोनिधे भवते

तुभ्यं नमः अस्तु । हे परशिवप्रसन्नाकृते परशिवस्य प्रसन्ना आकृति-रिव आकृतिर्यस्य तस्य संबोधनम् । हे महामते सपदि सप्रति समु-पागतं त्वदेकाश्रितं तव एकं मुख्यम् आश्रितम् आश्रयकर्तारं मां समीक्ष्य सम्यग्दृष्ट्वा समुद्धर उद्धारं कुरु । पृथ्वीवृत्तम् । 'जसौ जस-यला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् ॥ २६ ॥

इत्थं नामं नाममत्यादरेणा-
मन्नं धन्यं भूरिशुश्रूषणेच्छुम् ।
दृष्टो दृष्ट्यान्वग्रहीदेष शीघ्रं
मार्कण्डेयं मारवैरीव विप्रम् ॥ २७ ॥

इत्थमिति । इत्थमनेन प्रकारेण अत्यादरेण अतिविनयेन नामं नामं नत्वा नत्वा धन्यं सुकृतिनम् आसन्नं समीपवर्तिनं भूरिशुश्रूषणे-च्छुं भूरिषु बहुषु शुश्रूषणेषु सेवासु इच्छुम् इच्छावन्तम 'विन्दुरिच्छुः' इत्युप्रत्ययान्तो निपातितः । विप्रम् एषः विद्यातीर्थाचार्यः दृष्टः सन्मार्कण्डेयं मारवैरीव स्मरारिरिव दृष्ट्या आलोकनेन शीघ्रम् अन्व-ग्रहीत् अनुगृहीतवान् । शालिनीवृत्तमुक्तम् ॥ २७ ॥

अपृच्छदेनं मृदुवाङ् मुनीन्द्र-
स्त्वं कोऽसि किं न्वत्र समभ्युपागाः ।
संप्राप्तुकामः किमु सांप्रतं म-
द्धीति वात्सल्यसमन्वितोऽसौ ॥ २८ ॥

अपृच्छदिति । वात्सल्यसमन्वितः वात्सल्येन लालनीयजना-

त्स्वनस्नेहविशेषो वात्सल्यं तेन समन्वितः युक्तः मृदुवाक् कोमलवचनः असौ मुनीन्द्रः एनं प्रति निकटागतविप्रं प्रति । त्वं कः असि अत्र किं नु अभ्युपागाः आगतोऽभूः मत् मत्सकाशात् सांप्रतं किमु संप्राप्तुकामः ब्रूहि वद । इति अपृच्छत् पृष्टवान् । वृत्तं तु इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥ २८ ॥

संसारे बहुलतरश्रमैरसारे-
ऽवस्थातुं सह इह सर्वथापि नाहम् ।
संन्यासाश्रममथ देहि मे महात्म-
न्नित्येवं स किल तमर्थयांचकार ॥ २९ ॥

संसार इति । बहुलतरश्रमैः अतिबहुलैः श्रमैः असारे इह अस्मिन्संसारे अवस्थातुम् अवस्थानं कर्तुं सर्वथापि सर्वप्रकारेणापि अहं न सहे । अथ हे महात्मन् मे मह्यं संन्यासाश्रमं देहि इत्येवमनेन प्रकारेण सः विप्रः तम् आचार्यम् अर्थयांचकार । प्रार्थयामास । प्रहर्षिणीवृत्तमुक्तम् ॥ २९ ॥

सदयमथ विधाय वर्यतुर्या-
श्रमिणममुं निगमान्तवाक्यजातम् ।
अखिलमुपदिशन्निषेव्यमाण-
श्चिरममुना स मुनिर्मुदं प्रपेदे ॥ ३० ॥

सदयमिति । अथानन्तरम् अमुं विप्रं वर्यतुर्याश्रमिणं वर्यः श्रेष्ठः तुर्याश्रमः संन्यासाश्रमः सः अस्यास्तीति तुर्याश्रमी वर्यश्चासौ तुर्या-

अमी च तं तथाभूतं विधाय अखिलं समस्तं निगमान्तवाक्य-जातम् उपनिषद्वाक्यसमूहं सदयं यथा स्यात्तथा उपदिशन् स मुनिः विद्यातीर्थाचार्यः अमुना चिरं निषेव्यमाणः सन् मुदं हर्षं प्रपेदे प्राप्तवान् । पुष्पिताग्रावृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ३० ॥

भारतीकृष्णयोः सद्गुणैः साम्यतो
भारतीकृष्णतीर्थेति विद्योतिताम् ।
योगपट्टाभिधां योगिराजादयं
प्राप्य तत्संगतः शृङ्गपुर्यां बभौ ॥ ३१ ॥

भारतीति । अयं गृहीतसंन्यासः सद्गुणैः बहुविद्यावत्त्वज्ञानोपदेशादिगुणैः भारतीकृष्णयोः सरस्वतीकृष्णयोः साम्यतः औपम्यात् विद्योतितां प्रकाशितां भारतीकृष्णतीर्थेति योगपट्टाभिधां योगिराजात् विद्यातीर्थाचार्यात् प्राप्य लब्ध्वा तत्संगतः तेन गुरुणा संगतः सन् शृङ्गपुर्यां बभौ भाति स्म । स्रग्विणीवृत्तम् । 'रैश्चतुर्भिर्युता स्रग्विणी संमता' इति लक्षणात् ॥ ३१ ॥

भ्रात्राकस्मिकविप्रकर्षमसहञ्ज्यायान्द्विजाग्र्यात्मजः
कुर्वन्नेकशिलापुरेण च स तं देशेषु तीर्थेष्वपि ।
भूयोऽन्वेषयिताथ शृङ्गनगरे कर्मन्दिराण्मन्दिरे
च्छात्रीभूतमवेक्ष्य तं स्वयनितानाप्त्यानुतप्तोऽभवत् ॥

भ्रात्रेति । द्विजाग्र्यात्मजः द्विजाग्र्यस्य द्विजश्रेष्ठस्य आत्मजः

पुत्रः भ्रात्रा अनुजेन आकस्मिकविप्रकर्षम् अकस्माद्भव आकस्मिकः । 'अन्तःपूर्वपदाट्ठञ्' इति सूत्रे 'अध्यात्मादेरेवेष्यते' इतीष्ट्या ठञ् । यो विप्रकर्षः विदूरभावः तम् असहन्नसहमानः ज्यायान् सः विद्वान् एकशिलापुरेण च तं विप्रकर्षं कुर्वन् सन् देशेषु तीर्थेष्वपि भूयः मुहुः अन्वेषयिता मृगयमाणः अथ अनन्तरं शृङ्गनगरे कर्मन्दिराण्मन्दिरे कर्मन्दिराजो विद्यातीर्थयतीश्वरस्य मन्दिरे स्थाने च्छात्रीभूतम् अन्तेवासीभूय स्थितं तं कनीयांसम् अवेक्ष्य आलोक्य स्वयतितानाप्त्या स्वस्य यतित्वाप्राप्त्या अनुततः पश्चात्तप्तः अभवत् । शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥

**श्रितबुधनिकरायां शृङ्गपुर्यां वरायां**
**स्वयमपि स मुनीन्द्रं प्रेक्ष्य सद्योगिसान्द्रम् ।**
**महिमघनमनूनं मान्यसंन्यासमेनं**
**गुरुममृतनिदानं प्रार्थयामास नूनम् ॥ ३३ ॥**

श्रितेति । स विद्वान् श्रितबुधनिकरायां श्रिता आश्रिता बुधानां निकराः समूहा यस्यां सा तथोक्ता तस्यां वरायां शृङ्गपुर्यां महिमघनं महिमभिर्घनं निबिडम् अनूनं पूर्णं सद्योगिसान्द्रं सद्भिर्योगिभिः सान्द्रं गुरुम् एनं मुनीन्द्रं विद्यातीर्थाचार्यं प्रेक्ष्य अमृतनिदानं अमृतस्य मोक्षस्य निदानम् आदिकारणं मान्यसंन्यासं मान्यं पूज्यं सन्यासं स्वयमपि प्रार्थयामास प्रार्थितवान् । नूनं निश्चये । 'नूनं तर्के विनिश्चये' इत्यमरः । मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ३३ ॥

कलितसकलवृत्तो योगिराड्लोकवित्तः
सविनयपटुभावं प्रेक्ष्य तद्योग्यमेतम् ।
भवदुरितविदारी स त्रिकालज्ञसूरी-
ड्ददित विदितपारिव्राज्यसाम्राज्यमस्मै ॥

कलितेति । कलितसकलवृत्तः कलितानि ज्ञातानि सकलानि वृत्तानि येन स तथोक्तः । योगिराट् योगिराजः लोकवित्तः लोकप्रसिद्धः भवदुरितविदारी भवः संसार एव दुरितं तद्विदारयतीति तच्छीलः त्रिकालज्ञसूरीट् त्रयाणां कालानां समाहारस्त्रिकालं तज्जानातीति त्रिकालज्ञः सूरीणां ईट् सूरीट् त्रिकालज्ञश्चासौ सूरीट् च सः विद्यातीर्थाचार्य एव तद्योग्यं संन्यासाश्रमयोग्यं सविनयपटुभावं विनयेन सहितः सविनयः पटोर्भावः पटुभावः तं प्रेक्ष्य अवलोक्य विदितपारिव्राज्यसाम्राज्यं परिव्राजः यतेः भावः पारिव्राज्यं तदेव साम्राज्यमैश्वर्यविशेषः विदितं ज्ञातं यत्पारिव्राज्यसाम्राज्यं तत् अस्मै ज्यायसे विदुषे अदित दत्तवान् ॥ ३४ ॥

हृद्यं विद्यासरिदधिगमारण्यमेनं सुशिष्यं
दृष्ट्वौचित्यात्सपदि कुशलो योगनाम्ना चकार ।
विद्यारण्यं तमथ तपसा प्रोज्ज्वलाभ्यामुभाभ्यां
सूर्येन्दुभ्यां सुरगिरिरिवाशेषलोकाश्रितोऽभात् ॥

हृद्यमिति । कुशलः स विद्यातीर्थाचार्यः हृद्यं हृदयप्रियं विद्यासरिदधिगमारण्यं विद्या एव सरितो नद्यस्तासाम् अधिगमस्य प्राप्तेः अरण्यम् ऋच्छन्त्यस्मिन्नरण्यं गहनम् । 'अर्तेर्निच' इति न्यप्रत्ययः ।

तमेनं सुशिष्यं दृष्ट्वा औचित्यात्सपदि शीघ्रं योगनाम्ना योगपट्टाभिधानेन अवयवव्युत्पत्त्यनुगुणनामधेयेन च विद्यारण्यं चकार । अथानन्तरं तपसा प्रोज्ज्वलाभ्यां प्रकाशमानाभ्याम उभाभ्यां छायाभ्याम् । करणे तृतीया । सूर्येन्दुभ्यां सुरगिरिरिव मेरुपर्वत इव अशेषलोकाश्रितः समस्तजनाश्रितः अभात् भाति स्म । उपमालंकारः ॥

वेदव्यासः सह मुनिवरैः सत्प्रबन्धानिवायं
विद्यारण्यः प्रवचनकृती भूरिभिः सूरिवर्यैः ।
विद्याः सर्वा हृदि विदितवान्वेदभाष्याणि चक्रे
कृत्यं यस्याखिलमपि सदा सर्वलोकोपकृत्यै ॥

वेदव्यास इति । सर्वाः समस्ताः विद्याः हृदि हृदये विदितवान् ज्ञातवान् प्रवचनकृती प्रवचने व्याख्याने कृती कुशलः अयं विद्यारण्यः विद्यारण्याचार्यः भूरिभिर्बहुभिः सूरिवर्यैः विद्वच्छ्रेष्ठैः सह मुनिवरैः मुनिश्रेष्ठैः सह वेदव्यासः सत्प्रबन्धानिव कृतीरिव वेदभाष्याणि वेदानाम् ऋगादीनां भाष्याणि चक्रे कृतवान् । यस्य विद्यारण्याचार्यस्य अखिलं समस्तमपि कृत्य कर्तव्यं चरित्रं सदा सर्वदा सर्वलोकोपकृत्यै सर्वेषां लोकानामुपकृत्यै उपकाराय अभूदिति शेषः । उपमालंकारः । मन्दाक्रान्तावृत्तमुक्तम् ॥ ३६ ॥

विज्ञाय यानि सम्य-
ग्विज्ञा विज्ञातसर्ववाक्यार्थाः ।
काव्यानीवाम्नाया-
न्सुव्याख्यातुं च शक्नुवन्तितमाम् ॥३७॥

**विज्ञायेति** । विज्ञाः विबुधाः यानि वेदभाष्याणि सम्यग्विज्ञाय ज्ञात्वा विज्ञातसर्ववाक्यार्थाः सन्तः विशेषेण ज्ञाताः सर्वेषां वाक्यानामर्थाः यैस्ते तथोक्ताः सन्तः आम्नायान् वेदान् काव्यानीव सुव्याख्यातुं च सुष्ठु व्याख्यातुमपि शक्नुवन्तितमां अतिशयेन क्षमन्ते. तानि चक्रे इति पूर्वेण संबन्धः । उपमालंकारः । वृत्तं त्वार्या पथ्यागीतिः । 'त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः । पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ॥ आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजंगेशः' इति लक्षणात् ॥ ३७ ॥

**अथ वेदभाष्यमखिलं**
**स दर्शयामास सादरं गुरवे ।**
**दृष्ट्वा सोऽपि च हृष्ट-**
**श्छात्रं तुष्टाव लोकचित्रमतिम् ॥ ३८ ॥**

**अथेति** । अथानन्तरं सः विद्यारण्याचार्यः अखिल वेदभाष्यं गुरवे विद्यातीर्थाचार्याय दर्शयामास दर्शितवान् । सोऽपि गुरुः दृष्ट्वा हृष्टः सन्लोकचित्रमतिं लोकानां जनानां चित्रा आश्चर्यजनिका तत्कारित्वात्ताच्छब्द्यम् । तथोक्ता मतिर्यस्य स तथोक्तं छात्रं तुष्टाव स्तुतवान् । 'ष्टुञ्स्तुतौ' इत्यस्माल्लिट् ॥ ३८ ॥

**स्थास्यति श्रुतिवदेतदनन्या-**
**मस्य संग्रहपराः सकलाः स्युः ।**

सर्वसूरिवरसंमतभावं
प्रापयेति स तमप्यनुजज्ञे ॥ ३९ ॥

स्थास्यतीति । सः विद्यातीर्थाचार्यः एतत् वेदभाष्यम् अवन्यां श्रुतिवत् वेदवत् स्थास्यति । अस्य भाष्यस्य सकलाः कलासहिताः सांशिनः समस्ता वा । 'कारणारम्भपूजासु संप्रधारणचेष्टयोः । काले शिल्पे वृत्तवृद्धौ चन्द्रांशे कलने कला । महाभूतेष्विन्द्रियेषु ज्ञानावयवयोरपि' इति वैजयन्ती । सग्रहपराः संपादनतत्पराः स्युः भवेयुः । सर्वसूरिवरसंमतभावं सर्वेषां सूरिवराणां संमतभावं संमतत्वं प्रापय नय इति तं विद्यारण्याचार्यम् अनुजज्ञे अनुज्ञातवान् । अपिशब्दः क्रियासमुच्चये । स्वागतावृत्तम् । 'स्वागतेति रनभा गुरुयुग्मम्' इति लक्षणात् ॥ ३९ ॥

संनिधिं सुविदुषां समुपेयां
तत्र तत्र परिशोधयितॄणाम् ।
सत्वरं समनुशाधि गुरो मा-
मित्युदैरिरदुदारमिमं सः ॥ ४० ॥

संनिधिमिति । तत्र तत्र परिशोधयितॄणां सुविदुषां संनिधिं समीपं समुपेयां समुपयायाम् । अभीष्टे लिङ् । हे गुरो मां सत्वरं शीघ्रं समनुशाधि विविच्य बोधय इति सः विद्यारण्याचार्यः उदारं महान्तमिमं विद्यातीर्थाचार्यम् उदैरिरत् उदीरितवान् ॥ ४० ॥

यत्राशरीरवाणीं
छात्राकलयसि ततः समायाहि ।
मत्सविधमिति निदेशं
प्रददे शान्तो गुरुः स तं गन्तुम् ॥ ४१ ॥

यत्रेति । हे च्छात्र यत्र अशरीरवाणीमाकाशवाक्यमाकलयसि श्रृणोषि ततस्तस्मात्प्रदेशात् त्वं मत्सविधं मत्समीपं समायाहि समागच्छ इति शान्तः गुरुः विद्यातीर्थाचार्यः तं विद्यारण्याचार्यं प्रति गन्तुं निदेशम् आज्ञां प्रददे दत्तवान्। उक्तेयं पथ्यार्यागीतिः ॥

आदायैष निदेशमस्य चरिता देशेष्वथैलेश्वरो-
पाध्यायादिमहाबुधेभ्य उदितां संदर्शयन्स्वां कृतिम् ।
पर्याप्तं न विशोधनं किल बुधैरित्याशु मत्वा ततः
काशीं प्राप्तुमना मुनीश्वरघनां विन्ध्याद्रिमासेदिवान् ॥

आदायेति। अथानन्तरम् एषः विद्यारण्याचार्यः। अस्य विद्यातीर्थगुरोः निदेशं शासनम् आदाय गृहीत्वा देशेषु चरिता संचरन्सन् एलेश्वरोपाध्यायादिमहाबुधेभ्यः एलेश्वरोपाध्याय आदिर्येषां ते तेभ्यो महाबुधेभ्य उदितां संजातां स्वां स्वकीयां कृतिं वेदभाष्यरूपां संदर्शयन् बुधैः एभिर्विद्वद्भिः विशोधनं विशेषेण शोधनम्। अस्याः कृतेरिति शेषः। पर्याप्तं पूर्णं न नाभूत्। किलेति संभावनायाम्। इति मत्वा ज्ञात्वा ततस्तस्माद्देशात् आशु शीघ्रं मुनीश्वरघनां मुनीश्वरैर्निबिडां काशीं काशिकानगरीं प्राप्तुमनाः प्राप्तुं मनो यस्य स तथोक्तः सन् विन्ध्याद्रिं विन्ध्यपर्वतम् आसेदिवान्

समीपं जगाम । आङ्पूर्वात् 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्मात् 'भाषायां सदवसश्रुवः' इति क्वसुः । शार्दूलविक्रीडितं वृत्तम् ॥४२॥

प्रातरैक्षत स तत्र कृशाङ्गं
ब्रह्मराक्षसमधिष्ठितवृक्षम् ।
पृश्निगोत्रभवशृङ्ग्यभिधानं
तृष्णयातितरलं क्षुधया च ॥ ४३ ॥

प्रातरिति । सः विद्यारण्याचार्यः तत्र विन्ध्याद्रिसमीपे अधिष्ठितवृक्षम् अधिष्ठितः आश्रितः वृक्षो येन स तथोक्तम् , तृष्णया अतितरलम् अतिचञ्चलं कृशाङ्गं कृशानि अङ्गानि अवयवा यस्य स तथोक्तम् । पृश्निगोत्रभवशृङ्ग्यभिधानं पृश्नयो नाम महर्षयः तेषां गोत्रे संततौ भवतीति पृश्निगोत्रभवः शृङ्गीत्यभिधानं यस्य स तथोक्तः । स चासौ शृङ्ग्यभिधानश्चेति कर्मधारयः । तं ब्रह्मराक्षसं प्रातः ऐक्षत दृष्टवान् । स्वागतावृत्तम् ॥ ४३ ॥

भीषणं निकटमेत्य पतन्तं
सोऽन्वयुङ्क्त करुणाकर एतम् ।
कोऽसि किं तव कुरूपमिदं किं
वासमत्र विदधासि वदेति ॥ ४४ ॥

भीषणमिति । करुणाकरः करुणाया दयाया आकरः खनिः स विद्यारण्याचार्यः निकटं समीपम् एत्यागत्य पतन्तं भीषणं भीषयतीति भीषणः तं भयंकरम् एतं ब्रह्मराक्षसं त्वं कः असि भवसि ।

तव इदं कुरूपं किम् । अत्रास्मिन्वृक्षे वासम् अवस्थानं किंनिमित्तं विदधासि करोषि । विपूर्वाद्धधतेर्लटि मध्यमपुरुषैकवचनम् । वद ब्रूहि इति अन्वयुङ्क्त पृष्टवान् । प्रश्नार्थकादनुपूर्वात् 'युजिर् योगे' इत्यस्माल्लङ् । तथा चाख्यातचन्द्रिका 'अनुयुङ्क्ते प्रश्नयति प्रश्ने शीप्सति पृच्छति' इति ॥ ४४ ॥

त्रेतायुगे खलु तुलापुरुषं महात्मा
मह्यं ददौ मुनिपते विबुधाय रामः ।
दैवादकार्षमथ निष्कृतिमस्य नाह-
मीदृक्ततोऽस्मि वितर क्षुधिताय मेऽन्नम् ॥

त्रेतायुग इति । हे मुनिपते महात्मा रामः दाशरथिः विबुधाय मह्यं त्रेतायुगे तुलापुरुषं तुलापुरुषाख्यदानं ददौ दत्तवान् । खलु निश्चये । अथ अनन्तरम् अहम् अस्य महादानप्रतिग्रहस्य निष्कृतिं प्रायश्चित्तं दैवात् अदृष्टात् नाकार्षं न कृतवान् । ततस्तस्मात्कारणात् ईदृक् एतादृशब्रह्मराक्षसरूपः अस्मि भवामि क्षुधिताय बुभुक्षिताय मे मह्यम् अन्नं वितर देहि । वसन्ततिलकावृत्तमुक्तम् ॥

इत्युक्तोऽयं शृङ्गिणा तेन योगी
नान्नं दातुं तेऽधिकारो यतेर्मे ।
पृच्छान्यांस्त्वं यामि काशीपुरीमि-
त्युक्तो भूयस्तं बभाषे स शृङ्गी ॥ ४६ ॥

इतीति । तेन शृङ्गिणा इति एवंप्रकारेण उक्तः योगी

विद्यारण्यः यते: मे मम तुभ्यम् अन्नं दातुम् अधिकारो न नास्ति । किं तु त्वम् अन्यान्पृच्छ प्रश्नं कुरु । अहं काशीपुरीं यामि गच्छामि इति एवंप्रकारेण भूयः पुनः उक्तः सः श्वपची तं विद्यारण्याचार्यं बभाषे ऊचे । शालिनीवृत्तमुक्तम् ॥ ४६ ॥

साधयाम्यभिमतं भवदीयं
साधु यामि भवता सह काशीम् ।
बादरायणमहर्षिकटाक्षा-
त्साधयिष्यति भवान्सकलेष्टम् ॥ ४७ ॥

साधयामीति । अहं भवदीयम् अभिमतं साधयामि निष्पादयामि । भवता त्वया सह काशीं काशीपुरीं साधु सुष्ठु यामि गच्छामि । भवान् बादरायणमहर्षिकटाक्षात् । बादरयणो व्यासः स चासौ महर्षिश्च तस्य कटाक्षात् सकलेष्टं सर्वमभीष्टं साधयिष्यति ॥

इष्टसाधनेतिकर्तव्यताप्रकारं श्लोकद्वयेनैकान्वयेनाह—

काशिकापतिमवेक्षितुकामः
प्रत्यहं श्वपचविग्रहधारी ।
कुक्कुराकृतिधरैः सह वेदैः
शीधुभाजनधरः फलपाणिः ॥ ४८ ॥

गुप्तमेवमतिगर्हितवेषो
व्यास एति बदरीविपिनात्स्वात् ।

वारितोऽपि सुगृहाण तदङ्घ्री
पूरयिष्यति स एव तवेष्टम् ॥ ४९ ॥

**काशिकेति ।** प्रत्यहं प्रतिदिनं काशिकापतिं विश्वेश्वरम् अवेक्षितुकामः द्रष्टुमभिलाषी कुक्कुराकृतिधरैः कुक्कुराणां श्वनाम् आकारधारिभिः वेदैः सह शीधुभाजनधरः मधुभाण्डधरः पलपाणिः पिशितहस्तः श्वपचविग्रहधारी व्यासः एवम् अतिगर्हितवेषः सन् अतिकुत्सितवेषवान् गुप्तम् अप्रकाशं यथा भवति तथा स्वात्स्वकीयाद्बदरीवनात् एति आगच्छति । त्वं वारितोऽपि निवारितोऽपि तदङ्घ्री तस्य व्यासस्य अङ्घ्री चरणौ सुगृहाण । स एव तव इष्टम् ईप्सितं पूरयिष्यति ॥ ४८ ॥ ४९ ॥

मह्यमन्नमपि संवितरीतुं
यत्यतां च भवता यतिवर्य ।
इत्युदीरितवता सह योगी
शृङ्गिणा द्रुतमवाप स काशीम् ॥ ५० ॥

**मह्यमिति ।** हे यतिवर्य, भवता अन्नमपि मह्यं संवितरीतुं सम्यग्दातुं यत्यतां यत्नः क्रियताम् । भावे लोट् । इत्युदीरितवता शृङ्गिणा सह स योगी विद्यारण्याचार्यः काशीं काशीनगरीं द्रुतं त्वरितम् अवाप प्राप्तवान् । स्वागतावृत्तम् ॥ ५० ॥

काशिकां परशिवप्रकाशिकां
भासितां बुधवरैरवाप्तवान् ।

इष्टदां सपदि सुष्टु यतीश-
स्तुष्टुवे परतरां परितोषात् ॥ ५१ ॥

काशिकामिति । यतीशः विद्यारण्याचार्यः बुधवरैः विद्वच्छ्रेष्ठैः भासितां प्रदीप्ताम् इष्टदाम् इष्टदात्रीं परतराम् अत्युत्कृष्टां पराशिवप्रकाशिकां पराशिवस्य परमेश्वरस्य प्रकाशिकां प्रकाशयित्रीं काशिकां काशीनगरीम् अवाप्तवान् सन् परितोषात् प्रहर्षात् सपदि सुष्टु तुष्टुवे स्तोत्रं चक्रे । वृत्तं तु 'रो नराविह रथोद्धता लगौ' । स्वागतालक्षणं तु पूर्वमुक्तम् । तयोरुपजातिः ॥ ५१ ॥

श्रुतयः स्मृतयो महापुराणा-
न्यपि चास्या महिमानमामनन्ति ।
यतिनः कृतिनो मुदा भजन्ति
व्रतिनश्च प्रथिताः स्तुवन्त एनाम् ॥ ५२ ॥

श्रुतय इति । अस्याः काश्याः महिमानं माहात्म्यं श्रुतयः निगमाः स्मृतयः मनुस्मृत्यादयः महापुराणानि ब्राह्मादीन्यपि च आमनन्ति आसमन्तात् अभ्यासेन कथयन्ति । कृतिनः मनीषिणः प्रथिताश्च व्रतिनः व्रतशीलाः यतिनश्च, एनां काशीं स्तुवन्तः प्रशंसन्तः मुदा भजन्ति सेवन्ते । पुष्पिताग्रावृत्तमुक्तम् ॥ ५२ ॥

विश्वेश्वरोऽशेषसुरेषु मुख्यो
भागीरथी सर्वनदीषु मुख्या ।

क्षेत्रेषु सर्वेषु तथास्ति काशी
युक्तं त्विहैव त्रयमेकरूपम् ॥ ५३ ॥

विश्वेश्वर इति। अशेषसुरेषु सर्वदेवेषु विश्वेश्वरः काशीनाथः मुख्यः श्रेष्ठः। सर्वनदीषु समस्ततटिनीषु भागीरथी मुख्या श्रेष्ठा। सर्वेषु क्षेत्रेषु काशी तथा मुख्या अस्ति विद्यते। इहैव अस्मिन्प्रदेश एव त्रयं पूर्वोक्तम् एकरूपं युक्तम् अस्तीति शेषः। उपेन्द्रवज्रावृत्तमुक्तम् ॥ ५३ ॥

ईट्टे सर्वजनो यां दृष्टादृष्टे फले च या दत्ते।
सा काशी प्राकाश्यान्नो कस्य स्फुरति लोकस्य ॥

ईट्ट इति। यां काशीं सर्वजनः समस्तलोकः ईट्टे स्तौति। 'ईड स्तुतौ' इत्यस्माल्लट्। या दृष्टादृष्टे फले दृष्टफलं जलस्थलसौकर्यादिप्रयुक्तसुखमैहिकम् अदृष्टफलं पारलौकिकं फलद्वयमपि दत्ते ददाति सा काशी कस्य लोकस्य जनस्य प्राकाश्यात् प्राकट्यात् नो स्फुरति। अपि तु सर्वस्यापि प्रकटतया स्फुरतीत्यर्थः। सर्वजनस्तुतामैहिकामुष्मिकफलप्रदां काशीं सर्वो जनो जानातीति भावः। पथ्यार्यावृत्तम् ॥

श्लोकद्वयेनैकान्वयेन काशीं विशिनष्टि—

अस्ति विस्तृतसमस्तवस्तुम-
न्निस्तुलापणमहस्ततिस्तुता।
यागिरागिसुविरागियोगिस-
द्भोगिलोकविलसद्गतागता ॥ ५५ ॥

सुप्रचण्डपरवाक्यखण्डनो-
द्दण्डताण्डविततुण्डपण्डिता ।
सूक्तियुक्तिमतिशक्तिमत्तमै-
रुत्तमा बहलभुक्तिमुक्तिदा ॥ ५६ ॥

अस्तीति । विस्तृतानि प्रसृतानि समस्तवस्तूनि येषु सन्तीति विस्तृतसमस्तवस्तुमन्तः ते च ते निस्तुलाश्च आपणाः तेषां यानि महांसि तेषां तत्या विस्तारेण स्तुता श्लाघिता, यागिनः यागवन्तः रागिणः अनुरक्ताः सुविरागिणः सुष्ठु विरक्ताः योगिनः योगभाजः सद्भोगिनः प्रशस्तभोगजुषश्च ये लोकाः जनाः तेषां विलसन्ति गतागतानि गमनागमनानि यस्यां सा तथोक्ता । सुप्रचण्डपरवाक्यखण्डनोद्दण्डताण्डविततुण्डपण्डिता । सुप्रचण्डानां परेषां वाक्यानां खण्डने उद्दण्डाः ताण्डवं संजातमेषां तानि ताण्डवितानि तुण्डानि येषां ते तथोक्ताश्च पण्डिता यस्यां सा तथोक्ता सूक्तियुक्तिमतिशक्तिमत्तमैः सूक्तिषु युक्तयो यासां ताः मतेर्बुद्धेः शक्तयः सामर्थ्यानि ताः येषां सन्ति तच्छ्रेष्ठैः उत्तमा उत्कृष्टा बहलभुक्तिमुक्तिदा बह्वीर्भुक्तीर्मुक्तीश्च ददातीति तथाभूता सा काशी अस्ति विद्यते । रथोद्धतावृत्तम् ॥ ५५ ॥ ५६ ॥

विजयतेऽम्बरचुम्बनसंभ्रमि-
प्रचुरसुन्दरमन्दिरबन्धुरा ।
प्रचितपातकजातविघातन-
प्रमितनीतिमनीषिमुनीप्सिता ॥ ५७ ॥

विजयत इति । अम्बरचुम्बनसंभ्रमिप्रचुरसुन्दरमन्दिरबन्धुरा अम्बरस्याकाशस्य चुम्बने संभ्रमो येषामस्ति तानि तथोक्तानि प्रचुराणि बहूनि सुन्दराणि मनोहराणि यानि मन्दिराणि तैर्बन्धुरा नतोन्नता । 'बन्धुरस्तु नतोन्नतः' इति विश्वः । प्रचितपातकजात-विघातनप्रसितनीतिमनीषिमुनीप्सिता । प्रचितानि संपन्नानि पातकजातानि पापकदम्बकानि तेषां विघातने प्रसिता आसक्ताः ये नीतिमनीषिणो मुनयस्तैरीप्सिता वाञ्छिता काशी विजयते विशेषेण जयति । 'विपराभ्यां जेः' इत्यात्मनेपदम् । द्रुतविलम्बितं वृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ ५७ ॥

सुरतीरिणी खलु पुरो विहारिणी-
सुखकारिणी मुनिमनोनुचारिणी ।
भवदारिणी भवशिरोविसारिणी
भयवारिणी जयति पापहारिणी ॥ ५८ ॥

सुरतीरिणीति । पुरः पुरस्तात् । नगर्या इति शेषः । विहारिणी विहारशीला । सुखकारिणी सुखानि कर्त्री मुनिमनोनुचारिणी मुनीनां मननशीलानां मनःसु अन्तःकरणेषु अनुलक्षितत्वेन चारः संचारः अस्ति यस्यास्तथोक्ता । भवदारिणी भवं संसारं दारयति भिनत्ति तच्छीला । भवशिरोविसारिणी भवस्य शिवस्य शिरसि शीर्षे विसारिणी विशेषेण सरति तच्छीला । भयवारिणी भयं निवारयित्री । पापहारिणी पापानि हरति परिहरति तच्छाली । सुरतीरिणी देवनदी गङ्गा जयति सर्वोत्कर्षेण वर्तते । खल्विति प्रसिद्धौ ।

मञ्जुभाषिणीवृत्तम् । 'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात् ॥ ५८ ॥

ध्यानाद्गानात्स्नाना-
जलपानान्निकटयानाच्च ।
नानादानाच्चीर्णा-
त्फलदा मणिकर्णिकात्र मुनिवर्ण्या ॥ ५९ ॥

ध्यानादिति । ध्यानात् तच्चिन्तनप्रत्ययविशेषात् । गानात् स्तवनात् । स्नानात् अवगाहनात् । जलपानात् अम्बुपानात् । निकटयानात् समीपगमनात् । चीर्णात् विहितात् । नानादानाच्च । फलदा पुण्यदात्री । मुनिवर्ण्या मुनिभिर्वर्ण्या । मणिकर्णिका अत्र यात्रायाम् । अस्तीति शेषः । वृत्तं तु पथ्यार्योद्गीतिः ॥ ५९ ॥

भक्तमान्यभुवनत्रयेशितु-
र्युक्तमेव हितमुत्तमोत्तमम् ।
क्षेत्रमुक्तमविमुक्तनामकं
नात्र संशयलवोऽपि विद्यते ॥ ६० ॥

भक्तेति । भक्तैर्मान्यस्य भुवनत्रयेशितुः विश्वेश्वरस्य । उत्तमोत्तमं क्षेत्रम् । तत् काशिकाख्यं क्षेत्रं युक्तमेव योग्यमेव वासायेति शेषः । हि यस्मात्कारणात् । अविमुक्तनामकम् , तन्निवासाद्विमो-

केनेति यावत् । अत्र अस्मिन्नर्थे संशयलवोऽपि संदेहलेशोऽपि । न विद्यते नास्ति । रथोद्धतावृत्तम् ॥ ६० ॥

सद्भक्षाशितृभिर्विषाशनमहो लिप्ताङ्गरागद्रवै-
र्भस्मैकानिशधारणं विवसनं कौशेयवासप्रियैः ।
द्वैरूप्यं ध्रुवमाप्यते निजतनौ यस्यां जनैः साप्यसौ
काशी सत्यमपेक्षिता सुविदुषां किं तद्विचित्रं स्तुवे ॥

सदिति । सद्भक्षाणां माण्डलड्डुकादीनाम् अशितृभिः भोक्तृभिः जनैः । विषाशनं विषभक्षणम् लिप्ताङ्गरागद्रवैः लिप्ताः अङ्गरागद्रवाः श्रीगन्धागरुकुङ्कुमादयः यैस्तैः । भस्मैकानिशधारणं भस्मनः एकं मुख्यम् अनिशधारणं सन्ततधारणम् । कौशेयवासप्रियैः पट्टांशुकसंप्रीतैः । विवसनं दिगम्बरता । निजतनौ स्वकीयदेहे । द्वैरूप्यं स्त्रीपुंसरूपता । ध्रुवं निश्चयेन । यस्यां नगर्याम् । आप्यते प्राप्यते । सापि असौ काशी । सुविदुषाम् अपेक्षिता । तदाश्चर्यं किं स्तुवे स्तौमि । काश्यां हि मृतानां नीलकण्ठभस्मधारिविवस्त्रार्धनारीश्वररूपप्राप्तिरिति व्यञ्जनात् व्याजस्तुतिरलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

इति स्तुत्वा काशीमधिनगरि सर्वत्र चरिता
महान्विद्यारण्यो महितजगदाह्लादि महिमा ।

सतो दृष्ट्वा हृष्टस्त्रिदशतटिनीतीर उषितान्
चिरं व्यासान्वेषी जयति कृतिशोधे धृतमनाः ॥

इति श्रीमत्परमहंसपरिव्राजकादिश्रीमन्नृसिंहभारतीकरकमल-
सजातसकलविद्याविशारदपण्डितपुण्डरीकमण्डली-
मार्ताण्डश्रीमत्सच्चिदानन्दभारतीस्वामिभिर्निर्मा-
पिते विद्वद्बालकश्रीमत्काशीलक्ष्मणशास्त्रि
विरचिते गुरुवंशे महाकाव्ये
चतुर्थः सर्गः ॥

इतीति । इति इत्थंप्रकारेण । काशीं स्तुत्वा । अधिनगरि नगर्याम्, सप्तम्यर्थेऽव्ययीभावः । सर्वत्र चरिता संचरन् । महितजगदाह्लादिमहिमा महितः पूजितः जगदाह्लादी महिमा यस्य स तथोक्तः । त्रिदशतटिनीतीरे गङ्गातीरे । उषितान् कृतवासान् । सतः सज्जनान् दृष्ट्वा । हृष्टः । कृतिशोधे स्वकीयवेदभाष्यस्य शोधने, धृतमनाः धृतं मनो यस्य सः, आसक्त इति भावः । व्यासान्वेषी वेदव्यासान्वेषणशीलः । विद्यारण्यः विद्यारण्याचार्यः । चिरं बहुकालम् । जयति उत्कर्षेण वर्तते । शिखरिणीवृत्तम् ॥

इति गुरुवंशव्याख्यायां भावबोधिन्यां
चतुर्थः सर्गः ॥

---

## पञ्चमः सर्गः ॥

अथ व्यासान्वेषिणो विद्यारण्याचार्यस्य आकस्मिकं तद्दर्शनं विविनक्ति—

श्रीकरं सकललोकनुतं तं
प्रागुदीरितसुगोपितवेषम् ।
बादरायणमवैक्षत विद्या-
रण्ययोगितिलको मुनिराजम् ॥ १ ॥

श्रीकरमिति । (ईक्षितुकामः द्रष्टुमभिलाषी ।) विद्यारण्यः स चासौ योगितिलको योगिश्रेष्ठश्च । प्रागुदीरितसुगोपितवेषं प्राक् पूर्वं श‍ृङ्गिणा उदीरितः उक्तः सुगोपितः सुष्ठु अप्रकाशितः वेषो यस्य सः । तं प्रसिद्धम् । सकललोकनुतं सर्वजनस्तुतम् । श्रीकरं लक्ष्मीकरम् । मुनिराजं बादरायणं व्यासमहर्षिम् । अवैक्षत दृष्टवान् । अवपूर्वकात् 'ईक्ष दर्शने' इत्यस्मात् लङ् । सर्गेऽस्मिन् स्वागता वृत्तम् । लक्षणं तु प्रागुक्तम् ॥ १ ॥

निर्गतं स बदरीवनमार्गा-
द्विश्वनाथनिलयं प्रति यान्तम् ।
सारमेयतनुवेदपरीतं
पारमार्थिकमनाः प्रणनाम ॥ २ ॥

निर्गतमिति । पारमार्थिकमनाः परमार्थे साधु पारमार्थिकं तादृशं मनो यस्य स तथोक्तः । स विद्यारण्याचार्यः । बदरीवनमार्गात् निर्गतम् । विश्वनाथनिलयं प्रति विश्वेश्वरालयं प्रति । यान्तं गच्छन्तम् । सारमेयतनुभिः श्वाकारैः वेदैः परीतं परिवृतम् । वेदव्यासमहर्षिम् । प्रणनाम प्रणतवान् । उपसर्गादिसमासेऽपि णोपदेशस्येति णत्वम् ॥ २ ॥

वारितोऽपि च निजाकृतिगोप्त्रा
मस्करिन् स्पृश न मामिति वक्त्रा ।
सैष एव मुनिराडिति वेत्ता
न व्यमुञ्चत पदे स तदीये ॥ ३ ॥

वारित इति । निजाकृतिगोप्त्रा निजां स्वकीयाम् आकृतिं गोपायतीति निजाकृतिगोप्ता । हे मस्करिन् यते । मां न स्पृश इति वक्त्रा वदता तेन व्यासेनेति शेषः । वारितोऽपि प्रतिषिद्धोऽपि । सः विद्यारण्याचार्यः । सैष एव स मुनिराडेष एवेति । वेत्ता ज्ञाता सन् । तदीये वेदव्याससंबन्धिनी । पदे चरणौ । न व्यमुञ्चत न त्यक्तवान् ॥ ३ ॥

बादरायणमवैमि महान्तं
सादरं शरणमेमि भवन्तम् ।
सुप्रसीद कृपयेति वदन्तं
सम्प्रसादमगदीद्यतिनं तम् ॥ ४ ॥

सज्जटालसितनीलतनुं सतीभिः जटाभिः लसिता प्रकाशिता नीला तनुः यस्य सः तथोक्तः । तं वेदव्यासम् । संददर्श दृष्टवान् । जटाविद्युतोर्व्यासमेघयोश्च बिम्बप्रतिबिम्बभावः । उपमालङ्कारः ॥ ८ ॥

श्लोकद्वयाभ्यामेकान्वयेन स्तवनगोचरं व्यासं विशिनष्टि—

पैलमुख्यमुनिभिः परिवीतं
योगपट्टमवलम्ब्य निषण्णम् ।
गोपनेप्सुविधिबद्धसुविद्या-
स्तोमवत्कलयतां प्रविभान्तम् ॥ ९ ॥

दक्षहस्तविलसन्मतिमुद्रं
कुम्भभूरिव तुरङ्गमवक्त्रम् ।
सर्वशास्त्रकृतिकृत्कृतिवर्य-
स्तं नुनाव परमोन्नतवृत्तम् ॥ १० ॥

पैलेति । पैलमुख्यैः पैलवैशम्पायनजैमिनिसुमन्त्वाद्यैः ऋग्यजुःसामाथर्वादिविद्याध्ययनयोग्यैः मुनिभिः मननशीलैः । परिवीतं कृतपरिवारम् । गोपनेप्सुविधिबद्धसुविद्यास्तोमवत् गोप्तुम् ईप्सुना इच्छता विधिना ब्रह्मणा बद्धेन सुविद्यास्तोमेन तुल्यम् । कलयतां जानताम् । प्रविभान्तं प्रकर्षेण विभासमानम् । योगपट्टम् अवलम्ब्य । निषण्णम् उपविष्टम् । दक्षहस्तविलसन्मतिमुद्रं दक्षहस्ते दक्षिणकरे विलसन्ती चिन्मुद्रा यस्य तम् । परमोन्नतवृत्तं परमोन्नतानि उत्कृष्टानि वृत्तानि चरित्राणि यस्य तं वेदव्यासम् । सर्वशास्त्र

कृतिकृत् सर्वेषु शास्त्रेषु कृतयः ग्रन्थाः तान् करोतीति तथोक्तः । कृतिवर्यः विद्वच्छ्रेष्ठः विद्यारण्याचार्यः । कुम्भभूः अगस्त्यर्षीश्वरः । तुरंगमवक्त्रं हयग्रीवमिव । नुनाव स्तुतवान् । उपमालंकारः उत्प्रेक्षा च ॥ १० ॥

ब्रह्मणाधिगमितः श्रुतिराशिः
संव्यभाजि भवता शुकतात ।
ब्रह्मसूत्रनिकरात्मकशास्त्रं
निर्मितं सदपवर्गनिदानम् ॥ ११ ॥

ब्रह्मणेति । हे शुकतात व्यासमहर्षे ब्रह्मणा चतुरास्येन अधिगमितः प्रापितः श्रुतिराशिः वेदराशिः । भवता त्वया । संव्यभाजि सम्यक् विभक्तः । सदपवर्गनिदानं संश्चासौ अपवर्गश्च सदपवर्गः प्रशस्तकैवल्यात्मिका मुक्तिः सालोक्यसारूप्यसार्ष्टि सायुज्याख्या इतराश्चतुर्विधाः । तथा चोक्तं पद्मपुराणे— 'सालोक्यमपि सारूप्यं सार्ष्टि सायुज्यमेव च । कैवल्यं चेति तान्विद्धि मुक्ती राघव पञ्चधा । मां पूजयति निष्कामः सर्वदाज्ञानवर्जितः । स मे लोकं समासाद्य भुङ्क्ते भोगान्यथेप्सितान् । ज्ञात्वा मां पूजयेद्यस्तु सर्वकामविवर्जितः । मया समानरूपः सन् मम लोके महीयते । इष्टापूर्तादिकर्माणि मत्प्रीत्यै कुरुते तु यः । यत्करोति यदश्नाति यज्जुहोति ददाति यत् । यत्तपस्यति तत्सर्वं यः करोति मदर्पणम् । मल्लोके स श्रियं भुङ्क्ते मत्तुल्यप्राभवं भजेत् । यस्तु शान्त्यादियुक्तः सन् मामात्मत्वेन पश्यति । स जायते परं ज्योति-

रद्वैतं ब्रह्म केवलम् । अतः स्वरूपावस्थानं मुक्तिरित्यभिधीयते' इति। सालोक्यम् एकलोकवासः । सारूप्यं समरूपत्वम् । सार्ष्टयं समानैश्वर्यम् । ऋष्टिशब्दः खड्गवाची ऐश्वर्यलक्षकः । सर्ष्टेः भावः । सार्ष्टयम् । सह युङ्क्ते व्यवहरतीति सहयुक् तस्य भावः सायुज्यम् । अहं ब्रह्मोपासनैः प्राप्यं तदाविष्टितत्पदवीमत्त्वम् । कैवल्यं तु साक्षात्कृतस्वरूपावस्थानम् इतोऽधिकं मूलग्रन्थेषु द्रष्टव्यम् । तस्य निदानम् आदिकारणम् । ब्रह्मसूत्राणां ब्रह्मप्रतिपादकवेदान्तसूत्राणाम् 'अथातो ब्रह्मजिज्ञासा' इत्यादीनां निकरः समूहः तदात्मकं तच्छास्त्रं च । तद्भवता निर्मितं कृतम् ॥ ११ ॥

योगसूत्रचयभाष्यमभीष्टं
योगिनामपि पुराणकवीन्द्र ।
देव कीर्तयितुमर्हति को वा
तावकानगणितान्सुगुणौघान् ॥ १२ ॥

योगेति । हे पुराणकवीन्द्र पुराणः पुरातनश्चासौ कवीन्द्रश्च कविश्रेष्ठश्च तस्य संबोधनम्; पुराणादीनां ब्रह्मादीनां कविः कवयिता स चासाविन्द्रश्च तस्येति वा योगिनामभीष्टम् । योगसूत्रचयभाष्यमपि योगसूत्राणि अथ योगानुशासनमित्यादीनि पातञ्जलानि तेषां चयस्य समूहस्य भाष्यमपि भवता निर्मितमिति शेषः । हे देव । तावकान् अगणितान् असंख्याकान् । सुगुणौघान् सुगुणसमूहान् । कीर्तयितुं स्तोतुम् । को वा अर्हति योग्यो भवति, न कोऽपीत्यर्थः ॥ १२ ॥

भूरिजन्मसु कृतैः सुकृतैर्मे
दृष्टिगोचर उदेषि नमस्ते ।
किं बहूक्तिभिरवातर एवं
विष्णुरेव मदनुग्रहणाय ॥ १३ ॥

भूरीति । भूरिजन्मसु कृतैः सुकृतैः मे दृष्टिगोचरः उदेषि उदितोऽसि । बहूक्तिभिः बहुभाषणैः किं किं प्रयोजनम् । विष्णुरेव नारायण एव मदनुग्रहणाय सतां सत्पुरुषाणाम् अनुग्रहणाय अनुग्रहविधानाय । एवं एतदाकारधारणप्रकारेण । अवातरः अवतीर्ण आसीः । तथा चोक्तं भारते मोक्षधर्मे 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं भुवि । को ह्यन्यः पुरुषव्याघ्र महाभारतकृद्भवेत्' इति । 'द्वापरे द्वापरे विष्णुः व्यासरूपी महामुनिः' इति तत्त्वविवेकटीकायाम् रत्नकोशे नृसिंहाश्रमीये च ॥ १३ ॥

इत्यथ स्तुतिपरं यतिचन्द्रं
प्रत्युवाच करुणाब्धिर्मुनीन्द्रः ।
कस्त्वमत्र कुत आगत एवं
किं मया तव फलं करणीयम् ॥ १४ ॥

इतीति । अथ अनन्तरम् । इति पूर्वोक्तप्रकारेण स्तुतिपरं स्तोत्रतत्परम् । यतिचन्द्रं यतिः चन्द्र इव तं विद्यारण्याचार्यं प्रति । करुणाब्धिः दयासमुद्रः मुनीन्द्रो वेदव्यासः । त्वं कः अत्र एवं कुत आगतः । तव मया किं फलं करणीयम् इत्युवाच ॥

पृष्ट एवमृषिणा महतायं
दृष्टलोकचरितेन च योगात् ।
सुष्ठु वत्सलतया यतिवर्य-
स्तुष्ट आख्यदखिलं निजवृत्तम् ॥ १५ ॥

पृष्ट इति । ततः तदनन्तरम् । योगात् संयमविशेषात् । दृष्टलोकचरितेन च दृष्टानि लोकचरितानि येन स तथोक्तः तेन च । योगशास्त्रे हि भुवनज्ञानं सूर्ये संयमादिति स्पष्टोऽयमर्थः । अथापि सुष्ठु साधु । वत्सलतया वात्सल्येन । महता ऋषिणा व्यासेन । पृष्टः अयं यतिवर्यः विद्यारण्यमुनिः । तुष्टः सन् । अखिलं समस्तम् । निजवृत्तं स्वकीयचरित्रम् । आख्यत् अवोचत् ॥ १५ ॥

श्रेष्ठभाजि पुर एकशिलाख्ये
शिष्टवैदिकतमो जनको मे ।
कष्टदायिभवचालनभार-
क्लिष्टहृद्बहुवयाः समवात्सीत् ॥ १६ ॥

श्रेष्ठेति । श्रेष्ठान् भजतीति श्रेष्ठभाक् तस्मिन् । एकशिलाख्ये पुरे । शिष्टवैदिकतमः अतिशयेन वैदिकः वैदिकतमः शिष्टश्चासौ वैदिकतमश्च तथाविधः । कष्टदायिभवचालनभारक्लिष्टहृत् कष्टदायिनः भवस्य संसारस्य चालनमेव यापनमेव भारः तेन क्लिष्टं हृत्

यस्य स तथोक्तः । बहुवयाः बहुवर्षः । मे मम । जनकः पिता । समवात्सीत् सम्यक् वासं कृतवान् ॥ १६ ॥

वर्धितौ सह तदीयतनूजौ
अध्यगीष्वहि युतौ बहुविद्याः ।
प्रार्थितां सुयतितामथ विद्या-
तीर्थसंनिधिग आप कनीयान् ॥ १७ ॥

वर्धिताविति । सह वार्धितौ । युतौ युक्तौ । तदीयतनूजौ पूर्वोक्तस्य पुत्रौ । बहुविद्याः । अध्यगीष्वहि अधीतवन्तौ स्वः । अथ अनन्तरम् । मम कनीयान् अनुजः । विद्यातीर्थसंनिधिगः प्रार्थितां याचिताम् । सुयतितां प्रशस्तसंन्यासिभावम् । आप प्राप्तवान् ॥ १७ ॥

सोदरस्य विरहादतिखिन्नो
रोधनेऽप्यधनयोर्जनयित्रोः ।
साधनीयविभवो व्यदधां वा-
ग्वादिनीमनुपुरश्चरणानि ॥ १८ ॥

सोदरस्येति । अधनयोः नास्ति धनं ययोः तयोः जनयित्रोः मातापित्रोः रोधनेऽपि निरोधनेऽपि । साधनीयविभवः साधनीयः साधयितव्यः विभवो ऐश्वर्यं येन स तथोक्तः । अहं वाग्वादिनीमनुपुरश्चरणानि वाग्वादिन्या वागीश्वर्यां मनोर्मन्त्रस्य पुरश्चरणानि पुरश्चर्याविशेषान् । व्यदधां विहितवानस्मि ॥ १८ ॥

शक्तिसंयुतगणेशपदाब्जे
भक्तिमानजपमस्य मनूंश्च ।
सेवितापि तपसा चिरकालं
देवता न फलदाविरभूत्सा ॥ १९ ॥

शक्तीति । अहं शक्तिसंयुतगणेशपदाब्जे शक्त्या संयुतस्य गणेशस्य पदाब्जे पादकमले । भक्तिमान् सन् । अस्य गणेशस्य मनून् मन्त्रांश्च अजपम् जपं कृतवानस्मि । फलदा फलदात्री । सा देवता वागीश्वरी । चिरकालम् । तपसा सेवितापि । नाविरभूत् नाविर्भावं दधार ॥ १९ ॥

वाञ्छितार्थविरहादचिकीर्ष
किंचिदेव खलु दुष्करकार्यम् ।
अञ्जसा पुरत एत्य तु काचि-
न्मञ्जुवाचमवदन्महिला माम् ॥ २० ॥

वाञ्छितेति । अहं वाञ्छितार्थविरहात् देवताप्रसादप्राप्तिरूपवाञ्छितार्थविरहात् । दुष्करकार्यं किंचिदेव अनिर्वचनीयमेव । अचिकीर्षं कर्तुमिच्छुरभवम् किलेति संभावनायाम् । काचिन्महिला स्त्री । अञ्जसा शीघ्रम् । पुरतः पुरस्तात् । एत्य आगत्य । मां प्रति । मञ्जुवाचं मनोहरवाक्यम् । अवदत् उक्तवती ॥ २० ॥

वत्स मा वितनु साहसमेत-
स्मोत्सहे तव वरं वितरीतुम् ।

पश्य पातकगिरीन्प्रविनष्टान्
नश्यतोऽपि च पुरश्चरणैस्ते ॥ २१ ॥

वत्सेति। हे वत्स साहसं मा वितनु मा कुरु तव वरं वितरीतुं दातुम् प्रोत्सहे उत्सुका अस्मि। ते तव। पुरश्चरणैः पुरश्चर्याभिः प्रविनष्टान् विध्वस्तान्। नश्यतोऽपि च नाशं प्राप्नुवतोऽपि च। पातकगिरीन् पापपर्वतान् पश्य अवलोकस्व ॥ २१ ॥

द्रागितः परमपि प्रविधेहि
प्रागिवाधिकतपो हितसिद्ध्यै।
सेत्युदीर्य गिरमाशुतिरोधा-
द्त्यजं तदपि दुष्करकार्यम् ॥ २२ ॥

द्रागिति। हितसिद्ध्यै हितानाम् अभीष्टानाम्। सिद्ध्यै साधनाय। प्रागिव पूर्ववत्। इतः परमपि द्राक् अधिकतपो विधेहि कुरु। सा वनिता इति गिरं वाचम्। उदीर्य उक्त्वा। आशु शीघ्रम् तिरोधात् तिरोहितवती। अहमपि। तद्दुष्करं कार्यम् अत्यजं त्यक्तवानस्मि ॥ २२ ॥

आस्थितोऽपि भजनं जनयित्रोः
सोदरस्य विरहं तपसोढा।
मार्गणाय कलयन् तदनुज्ञां
निर्गतोऽस्मि मुनिराज पुरात्स्वात् ॥ २३ ॥

आस्थित इति। हे मुनिराज। अहं जनयित्रोः मातापित्रोः। भजने सेवने आस्थितोऽपि आस्थावानपि। सोदरस्य तं विरहं वियोगम् असोढा असहमानः सन्। मार्गणाय अन्वेषणाय। तदनुज्ञां तयोर्मातापित्रोरनुज्ञाम्। कलयन् अङ्गीकुर्वन् सन्। स्वात् पुरात् एकशिलापुरात् निर्गतः अस्मि ॥ २३ ॥

तत्र तत्र विचरन्नपि विद्या-
तीर्थमौनिनिकटे तमपश्यम्।
तत्र वीक्ष्य यतिभावमुपेतं
सद्विरक्तिरहमप्यमुमापम् ॥ २४ ॥

तत्रेति। तत्र तत्र तस्मिन् तस्मिन् प्रान्ते। विचरन् संचरन् सन्। तं भ्रातरं विद्यातीर्थमुनिनिकटे। अपश्यं दृष्टवानस्मि। तत्र विद्यातीर्थनिकटे। यतिभावं संन्यासिताम्। उपेतम् उपगतम्। तं भारतीकृष्णतीर्थाचार्यम्। वीक्ष्य अवलोक्य। सद्विरक्तिः अहमपि अमुं संन्यासिभावम् आपं प्राप्तवानस्मि ॥ २४ ॥

वेदभाष्यकृतिशोधचिकीर्षा
बोधितस्य मम शृङ्गिवचोभिः।
त्वामदर्शयत कामदुहं द्राक्
प्रेमवाननुगृहाण महात्मन् ॥ २५ ॥

वेदभाष्येति। शृङ्गिवचोभिः शृङ्गिवचनैः। बोधितस्य अवगमितस्य। मम। वेदभाष्यकृतिशोधचिकीर्षा वेदभाष्यस्य कृतेः

शेषस्य चिकीर्षां कर्तुमिच्छा । कामदुहं कामधेनुम् । त्वाम् । मां द्राक् अदर्शयत । हे महात्मन् । प्रेमवान् सन् अनुगृहाण अनुग्रहं कुरु ॥ २५ ॥

याचितोऽथ यतिनेति स पर्या-
लोचयद्धृदि महाशयवर्यः ।
याचते किमयमीप्सितमल्पं
रोचते न मम दातुरनल्पम् ॥ २६ ॥

याचित इति । अथ अनन्तरम् । इति इत्थम् । यतिना विद्यारण्यमुनिना । महाशयवर्यः महाभिप्रायश्रेष्ठः । स वेदव्यासमहर्षिः । याचितः प्रार्थितः सन् । हृदि हृदये । पर्यालोचयत् पर्यालोचितवान् । अयं विद्यारण्यः । ईप्सितम् अल्पं किं याचते । अनल्पं बहुलम् दातुः मम तत् न रोचते ॥ २६ ॥

योग्य एष उपदेष्टुमशेषं
भाग्यतो मम च दर्शनमासीत् ।
सत्वरं भवति येन तु सर्व-
ज्ञत्वमप्यभिदधे तमुपायम् ॥ २७ ॥

योग्य इति । अशेषम् उपदेष्टव्यम् समस्तं उपदेष्टुं एषः योग्यः अर्हो भवति । मम दर्शनं मत्कर्मकं दर्शनम् । भाग्यतः पुण्यात् । आसीत् अभूदपि । येनोपायेनास्य सत्वरं सर्वज्ञत्वं भवति । तमुपायं अभिदधे कथयामि ॥ २७ ॥

एवमात्मनि विभाव्य महाश्री-
देवताभजनरीतिमृषीन्द्रः ।
तत्स्वरूपमखिलं समभाणी-
दुत्सुको निखिलतन्त्ररहस्यम् ॥ २८ ॥

एवमिति । आत्मनि विभाव्य । ऋषीन्द्रः वेदव्यासः । उत्सुकः सन् । महाश्रीदेवताभजनरीतिं महती श्रीः यस्याः सा महाश्रीः सैव देवता परदेवता तस्याः भजनरीतिं भजनप्रकारम् । निखिल-तन्त्ररहस्यं निखिलेषु अन्यूनेषु तन्त्रेषु संहितासु रहस्यं गोप्यम् । तत्स्वरूपं परदेवताभजनस्वरूपम् । अखिलं कृत्स्नम् । अभाणीत् अवादीत् ॥ २८ ॥

एतयैव परदेवतयैते
प्रीतयादुरपि पृश्निमुनीन्द्राः ।
सिंहपीठमुपकल्प्य च विद्व-
त्सिंह देवपतये यतिवर्य ॥ २९ ॥

एतयेति । हे विद्वत्सिंह यतिवर्य । प्रीतया एतयैव परदेवतया । पृश्निमुनीन्द्राः । सिंहपीठं सिंहासनम् । उपकल्प्य कृत्वा । देव-पतये इन्द्राय । अदुः दत्तवन्तः ॥ २९ ॥

त्वं च तद्रचयिता बहुलान्नं
वाञ्छितं वितर शृङ्गिण एवम् ।

सर्वमप्यथ सुसिद्ध्यति कार्यं
सर्वथापि तव यद्यदभीष्टम् ॥ ३० ॥

त्वमिति । हे यतिवर्य । तत् सिंहपीठदानम् । त्वं च त्वमपि । एवं रचयिता सन् संविधाता सन् । शृङ्गिणे शृङ्गिभट्टाय । बहुलान्नम् । वितर देहि । अथ अनन्तरम् । तव यद्यदभीष्टम् । तत्सर्वमपि कार्यम् । सर्वथापि सुसिद्ध्यति ॥ ३० ॥

धन्यमित्थमभिधाय यतीन्द्रं
संनुतोऽन्तरधात्स मुनीन्द्रः ।
शृङ्गिणा समभिमन्त्र्य मतङ्गं
संगतः शिखरिणं स उपागात् ॥ ३१ ॥

धन्यमिति । इत्थम् एवंप्रकारेण । धन्यं यतीन्द्रम् । अभिधाय । संनुतः सम्यङ्नुतः प्रशंसितः । मुनीन्द्रः । मुनिश्रेष्ठो वेदव्यासः अन्तरधात् अन्तर्हितवान् । स विद्यारण्यमुनिः । शृङ्गिणा सह समभिमन्त्र्य आलोच्य । संगतः तेन सह संगतिमान् । मतङ्गं मतङ्गाख्यं शिखरिणं पर्वतम् । उपागात् उपागतवान् ॥ ३१ ॥

चारुतुङ्गपदसंगतभद्रा-
तीरभासितनिवासमुदारम् ।
भास्वरं नतशरण्यविरूपा-
क्षेश्वरं यतिवरो विलुलोके ॥ ३२ ॥

चार्विति । तुङ्गपदसंगतभद्रातीरभासितनिवासं तुङ्गपदसंगतभद्रायाः पदसंगतिश्च भद्रायाः प्राक् विस्तरेण व्याख्याता । नात्र विस्तरभयात् प्रपञ्च्यते तीरे तटे भासितो निवासो यस्य सः तथोक्तम् । भास्वरं प्रकाशमानम् । नतशरण्यविरूपाक्षेश्वरं नतानां नन्तृणां शरणयितुमर्हः शरण्यः शरणमाचष्टे शरणयति तस्मादर्हार्थे कृत्यः । विरूपाक्षेश्वरं विरूपाणि असमानरूपाणि सूर्यचन्द्राग्न्यात्मकानि अक्षीणि नेत्राणि यस्य सः विरूपाक्षः बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् स चासावाश्वरश्च तं यतिवरः विद्यारण्याचार्यः चारु मञ्जु विलुलोके विलोकितवान् लोकृ दर्शन इत्यस्माल्लिडात्मनेपदम् ॥ ३२ ॥

राजतादुषितगुह्यकशैला-
त्याजिताचलगुणादसुरेण ।
हेमकूटमधिकं गिरिराजं
प्रेमकूटमनसाधिवसन्तम् ॥ ३३ ॥

राजतादिति । असुरेण रावणासुरेण त्याजिताचलगुणात् त्याजितः अचलगुणः न चलतीत्यचलः तस्य गुणः अचाञ्चल्यं स यस्य तस्मात् उषितगुह्यकशैलात् उषितः कृतवासः गुह्यकानां गुह्यकाख्यानयक्षविशेषाणां शैलः पर्वतः कैलासः तस्मात् राजतात् रजतःसंबन्धिनः सकाशात् अधिक हेमकूटाख्यं गिरिराजं प्रेमकूटमनसा स्नेहसमूहवाचित्तेन अधिवसन्तं अधिष्ठातारं विरूपाक्षेश्वरं विलुलोक इति पूर्वेणान्वयः उषितगुह्यकशैलात् त्याजिताचलगुणात्

इति च विशेषणद्वयं न्यूनतागमकम् । राजतात् हेमकूटस्याधिक्यं तु नाम्नैव भासते ॥ ३३ ॥

काशिकायितमतीव गुणौघै-
र्भासितं द्विजवरैरपि तीर्थैः ।
सत्क्रुन्मुनिजनाश्रितपम्पा-
क्षेत्रराजमधिगत्य विभान्तम् ॥ ३४ ॥

काशिकायितमिति । गुणौघैः गुणसमूहैः द्विजवरैः ब्राह्मणोत्तमैः तीर्थैरपि अतीव अतिशयेन भासितं प्रकाशितम् । सत्क्रुन्मुनिजनाश्रितपम्पाक्षेत्रराजं सत्क्रुद्भिः मुनिजनैः आश्रितः अधिष्ठितः पंपाक्षेत्रराजः तं अधिगत्य प्राप्य विभान्तं विशेषेण दीप्यमानं विरूपाक्षेश्वरं विलुलोक इति पूर्वेणान्वयः ॥ ३४ ॥

लोकचित्रमहिमानमवेक्ष्या-
स्तोकभक्तिविकसद्धृदयाब्जः ।
संप्रणम्य परिपूज्य विरूपा-
क्षं प्रभुं यतिरतीव नुनाव ॥ ३५ ॥

लोकेति । लोकचित्रमहिमानं लोकानां जनानां चित्रः आश्चर्यंकरी महिमा यस्य स तथोक्तः तं विरूपाक्षं अवलोक्य । अस्तोकभक्तिविकसद्धृदयाब्जः अस्तोकया अनल्पया भक्त्या परानुरक्त्या विकसत् विकासशालि हृदयाब्जं हृत्कमलं यस्य स तथोक्तस्तं विरू-

पाक्षं प्रभुं संप्रणम्य नमस्कृत्य परिपूज्य समर्च्य यतिः विद्यारण्याचार्यः अतीव अत्यन्तं नुनाव तुष्टवान् ॥ ३५ ॥

सोमभूषण विभो करुणाब्धे
कामितार्थद पदस्मृतिभाजाम् ।
व्योमकेश मुनिबृन्दनुत श्री-
हेमकूटगिरिनाथ नमस्ते ॥ ३६ ॥

सोमभूषणेति । हे विभो, विभवतीति विभुः तस्य संबोधनम् । सोमभूषण चन्द्राभरण । करुणाब्धे कारुण्यसमुद्र । पदस्मृतिभाजां चरणस्मरणजुषां कामितार्थद अभीष्टार्थदायक । व्योमकेश अकाश एव केशो यस्य तस्य संबोधनम् । मुनिबृन्दनुत ऋषिसमूहस्तुत । श्री हेमकूटगिरिनाथ । विरूपाक्ष ते तुभ्यं नमः ॥ ३६ ॥

किंनरादिवरदानकृते त्वं
मान्यसेऽत्र परितो बहुरूपः ।
धन्यतामुपगतोऽस्मि भवन्तं
यन्नमामि महयाम्यपि नौमि ॥ ३७ ॥

किन्नरेति । अत्र अस्मिन् हेमकूटगिरौ । परितः समन्तात् । किन्नरादिवरदानकृते किन्नरादीनां भक्तानां वरदानाय । बहुरूपः किन्नरेश्वरादिरूपवान् सन् । मान्यसे आद्रियसे । यत् यस्मात् कारणात् । भवन्तं नमामि नमस्करोमि । नौमि स्तौमि । अपि-

शब्दः क्रियासमुच्चये । तस्मात्कारणात् धन्यतां कृतार्थभावम् । उपगतः संप्राप्तः । अस्मि भवामि ॥

इत्युरुस्तुतिपरं यतिवर्यं
नित्यमीशमविहातुमनस्कम् ।
क्षुत्तृषोरसहनेन मनीषी
सत्वरं समवदत्किल शृङ्गी ॥ ३८ ॥

इतीति । इति इत्थम् । उरुस्तुतिपरं बहुस्तोत्रतत्परम् । ईशम् ईश्वरम् । नित्यं दिने दिने । अविहातुमनस्कम् अपरित्यक्तुकामम् । यतिवर्यं विद्यारण्याचार्यं प्रति । सत्वरं त्वरया सह यथा स्यात् तथा मनीषी शृङ्गी । क्षुत्तृषोरसहनेन समवदत्किल ॥ ३८ ॥

क्षेत्रषोडशकमध्यमतङ्ग-
क्ष्माधरे विजयपूर्वितताऽसीत् ।
योजनद्वयमिता मुनिमौले
भाजनं नरपतिप्रियलक्ष्म्याः ॥ ३९ ॥

क्षेत्रेति । हे मुनिमौले मुनीनां किरीट मुनिश्रेष्ठेत्यर्थः । 'चूडा किरीटम्' केशाश्च संयता मौलयस्त्रयः इत्यमरः । क्षेत्रषोडशकमध्यमतङ्गक्ष्माधरे क्षेत्राणां षोडशक क्षेत्रषोडशक षोडशक्षेत्राणीति यावत् । तस्य मध्ये । मतङ्गक्ष्माधरे मतङ्गनाम्नि पर्वते । तानि चोक्तानि यामले । 'प्रथमं मेरुपृष्ठे च निषधे च महीधरे । हेमकूटे हिमगिरौ पञ्चमे गन्धमादने ।

नीले मेघे च शृङ्गाख्ये महेन्द्रे च महागिरौ। क्षेत्राणि हि नवैतानि भौमानि विदितान्यथ। औदकानि च तत्रैव प्रोक्तान्यखिलसिन्धुषु। लवणाब्धीक्षुसाराब्धी सुराब्धिर्घृतसागरः। दधिसिन्धुः क्षीरसिन्धुः जलसिन्धुश्च सप्तमः। पूर्वोक्ता नव शैलेन्द्राः पश्चात्सप्त च सिन्धवः। आहत्य षोडशक्षेत्राणीति। योजनद्वयमिता योजनद्वयेन परिमिता। वितता विस्तीर्णा। नरपतिप्रियलक्ष्म्याः नरपतीनां राज्ञां प्रियायाः लक्ष्म्याः श्रियः। भाजनं पात्रम्। विजयपूः विजयाख्या नगरी आसीत् अस्ति स्म ॥ ३९ ॥

कालदोषवशतः क्षयमाप्ता
शीलिताखिलसुतन्त्रबलात्ताम्।
लीलया समवकल्प्य पुरं मां
पालयान्नद नितान्तमिहैव ॥ ४० ॥

कालेति। शीलिताखिलसुतन्त्र शीलितानि अभ्यस्तानि अखिलानि समस्तानि सुतन्त्राणि आगमग्रन्थाः येन सः तस्य संबोधनम्। इयं पुरी। कालदोषवशतः। क्षयम् आप्ता प्राप्ता। तां पुरं नगरीम्। लीलया बलात्कारेण। समवकल्प्य। हे अन्नद अन्नप्रदातः। इहैव मां नितान्तं पालय संरक्ष 'पा रक्षण' इत्यस्माण्णिजन्तात् पातेर्णौ लुग्वक्तव्य इति लुक् ॥ ४० ॥

एवमेतदुदितं स निशम्य
ग्रावराजमगमत्स मतङ्गम्।

सादरः सविधमस्य तदागा-
न्माधवेन सह सायणमन्त्री ॥ ४१ ॥

एवमिति । सः विद्यारण्यः । एवम् इत्थम् । एतदुदितं एतेन ऋषिणा उदितम् उक्तम् निशम्य श्रुत्वा । ग्रावराजं पर्वतश्रेष्ठम् । ‘ अद्रिगोत्रगिरि ग्रावा ’ इत्यमरः । मतङ्गं मतङ्गाख्यम् । अगमत् । तदा तस्मिन् काले । अस्य विद्यारण्यस्य । सविधं समीपम् । माधवेन सह सायणमन्त्री । सादरः सन् । आगात् आगतवान् ॥

तं तदा सविनयं स ययाचे
संततिं सुचरितैः परितोष्य ।
सन्ततं सकलवेद्यगदीत्तौ
संततिर्न युवयोर्भवितेति ॥ ४२ ॥

तमिति । तदा । सः सायणः । तं विद्यारण्यम् । सुचरितैः सुष्ठु चरित्रैः । परितोष्य संतोष्य । सविनयं विनयेन सहितं यथा स्यात्तथा । संततिं संतानम् । ययाचे याचितवान् । सन्ततं सततम् । सकलवेदी सर्वज्ञः सः विद्यारण्याचार्यः । तौ सायणमाधवौ प्रति । युवयोः संततिः संतानः । न भविता न भविष्यति । इति अगदीत् उक्तवान् ॥ ४२ ॥

तन्निशम्य वचनं बहुचिन्ता-
पन्नखिन्नमनसाववृणीताम् ।

वित्तमस्ति बहुलं तदमुष्मा-
त्पुत्रिणां गतिमवापय वेति ॥ ४३ ॥

तदिति । तौ सायणमाधवौ । तद्वाक्यं निशम्य श्रुत्वा । बहुचिन्तापन्नखिन्नमनसौ सन्तौ बह्वीभिः चिन्ताभिः आपन्नम् आपत्तिमत् खिन्नं मानसं ययोः तौ । बहुलं वित्तमस्ति अमुष्मात् वित्तात् । पुत्रिणां पुत्रवतां गतिम् । अवापय प्रापय वा इति तं विद्यारण्यम् । अगृणीताम् अब्रूताम् ॥ ४३ ॥

माधवीयमिति सायणीयमि
त्यादराद्यतिवरोऽर्थित आभ्याम् ।
वेदशास्त्रगकृतीः सकलास्ताः
साधु संव्यधित तद्द्वयनाम्ना ॥ ४४ ॥

माधवीयमिति । आभ्यां सायणमाधवाभ्याम् आदरात् अर्थितः प्रार्थितः । सः विद्यारण्यः । सकलाः समस्ताः । ताः वेदशास्त्रगकृतीः वेदभाष्यधातुवृत्तिन्यायमालाद्याः । तद्द्वयनाम्ना तयोर्द्वयोः सायणमाधवयोः, नाम्ना सायणीयमिति माधवीयमिति च साधु । संव्यधित कृतवान् ॥ ४४ ॥

कारिता अपि च संततिभेदाः
पूरिता अपि तयोरभिलाषाः ।
चारुणा चिरमनुग्रहणेनो-
द्धारयन्ति विनतान्हि महान्तः ॥ ४५ ॥

कारिता इति । अपि च । तयोः सायणमाधवयोः । संततिभेदाः संतानविशेषाः । 'वनं निधिस्तटाकश्च कृतिर्देवालयः सुतः । ततो विप्रप्रतिष्ठा च संतानाः सप्त कीर्तिताः ॥' इति उक्ताः संतानभेदाः कारिताः । अभिलाषाश्च पूरिताः । तथा हि महान्तः चिरं चारुणा मनोहरेणानुग्रहणेन अनुग्रहेण । विनतान् नमस्कर्तॄन् । उद्धारयन्ति हि अर्थान्तरन्यासालंकारः ॥ ४५ ॥

मङ्गलैकनिलये यदुवंशे
संगमाभिधमहीपतिरासीत् ।
संगता हि सुगुणा अमुमेवो-
त्तुङ्ग इत्युदितसार्थकनामा ॥ ४६ ॥

मङ्गलेति । मङ्गलस्य एको मुख्यो निलय आश्रयः तस्मिन् । यदुवंशे । संगमाभिधमहीपतिः संगम इति अभिधा यस्य स चासौ महीपतिश्च आसीत् । हि यस्मात्कारणात् । उत्तुङ्गम् उन्नतम्-अमुमेव सुगुणाः संगता इति उदितम् उक्तम्, सार्थकम् अर्थः सहितम् । नाम यस्य स तथोक्तः । अभूदिति शेषः ॥ ४६ ॥

पञ्च ते हरिहरक्षितिपालः
किंच कम्पनृपबुक्कमहीशौ ।
मारपक्षितिपमुद्दपराजौ
सूरयोऽस्य तनयाश्चिरमासन् ॥ ४७ ॥

पञ्चेति । अस्य सङ्गमक्षितिपतेः । हरिहरक्षितिपालः । किंच कम्पनृपबुक्कमहीशौ मारपक्षितिपमुद्दपराजौ च । पञ्च सूरयः विपश्चितः तनयाः चिरम् आसन् ॥ ४७ ॥

पण्डितो हरिहरेश्वर उर्व्या
मण्डनं च किल बुक्कमहीन्द्रः ।
पाण्डवेष्विव युधिष्ठिरपार्थौ
चण्डविक्रमयुतावचकास्ताम् ॥ ४८ ॥

पण्डित इति । उर्व्याः भूमेः । मण्डनम् आभरणम् हरिहरेश्वरः हरिहरनामा ईश्वरः स्वामी बुक्कमहीन्द्रश्च । पाण्डवेषु युधिष्ठिरपार्थाविव धर्मराजार्जुनाविव । चण्डविक्रमयुतौ चण्डौ कोपिनौ पराक्रमयुतौ । अचकास्ताम् अभाताम् । 'चकासृदीप्तौ' इत्यस्माल्लङ् प्रथमपुरुषद्विवचनम् ॥ ४८ ॥

तत्र तत्र धरणौ सकलास्ते
धात्र्यधीशपदभाज उदाराः ।
न्यायमार्गमविमुच्य पुरोक्तैः
मायणादिसचिवैः सह रेजुः ॥ ४९ ॥

तत्रेति । तत्र तत्र धरणौ भूमौ । उदाराः सकलाः सर्वे ते हरिहरादयः । धात्र्यधीशपदभाजः सन्तः धात्र्यधीशः भूपालकम् तस्य पदं भजन्तीति तथोक्ताः सन्तः । न्यायमार्गं नीतिमार्गम्

अविमृश्य अनुक्त्वा । पुरोक्तैः मायणादिसचिवैः अमात्यैः सह रेजुः दिदीपिरे ॥ ४९ ॥

एकमेकमथ सेवनमेता
नाकलय्य विबुधानवति स्म ।
वीररुद्रनृपती रणभूमी-
पारगामितधनुर्धरनाथः ॥ ५० ॥

एकमिति । रणभूमी पारगामितधनुर्धरनाथः रणभूम्याः पारगाः उत्तरभूमिगामिनः 'कृदिकारादक्तिन इति ङीष्' ते च ते अमिता धनुर्धराश्च तेषां नाथः वीररुद्रनृपतिः । विबुधान् अभिज्ञान् एतान् एकमेकं सेवनम् आकलय्य प्रापय्य अवति स्म रक्षति स्म ॥ ५० ॥

आदिशंभुमिव कारणदेवा
आदितय्यपमिवाग्निपुरोगाः ।
मुञ्जराजमिव वत्सनृपाद्याः
मञ्जु भेजुरधिकारिण एनम् ॥ ५१ ॥

आदिशंभुमिति । कारणदेवाः ब्रह्मविष्णुरुद्रेश्वरसदाशिवाः । आदिशंभुमिव प्रथमशिवमिव । आदिशंभुं कारणदेवा यथा भजन्ति तद्वदित्यर्थः । तदुक्तं रत्नत्रयपरीक्षायामप्पय्यदीक्षितैः 'कर्तृत्वं तस्य धर्मी कलयति जगतां पञ्चके सृष्टिपूर्वे धर्मः पुंरूपमातः सकलजगदुपादानभावं बिभर्ति' इति । तथा आचार्यैः जगत्सूत्रे चोक्त्यादि ।

वायुसंहितायामपि 'न शिवेन विना शक्तिः न शक्त्यापि विना शिवः । नानयोरन्तरं विन्द्याच्चन्द्रचन्द्रिकयोरिव ' इति । एवमेकवाक्यतया ब्रह्मादिसेव्यत्वं परशिवस्य निर्णीतम् । अग्निपुरोगाः अग्नियमवरुणपुरःसराः आदितेयपमिव देवेन्द्रमिव वत्सनृपाद्याः मुञ्जराजमिव । अधिकारिणः हरिहराद्याः । एनं वीररुद्रनृपतिम् । मञ्जु सुष्ठु भेजुः सिषेविरे 'भज सेवायाम्' इत्यस्माल्लिट् ॥ ५१ ॥

**विक्रमी हरिहरक्षितिपालो**
**बुक्कभूभृदपि चाल्पभुवौ तौ ।**
**मुख्यकोशभवने विनियुक्तौ**
**चक्रिणा चतुरुपायपरेण ॥ ५२ ॥**

**विक्रमीति** । विक्रमी पराक्रमवान् । हरिहरक्षितिपालः । बुक्कभूभृदपि बुक्कराजश्च । तौ अल्पभुवौ अल्पा भूः ययोः तौ । चतुरुपायपरेण सामदानभेददण्डाख्योपायचतुष्टयतत्परेण । चक्रिणा चक्रवर्तिना वीररुद्रनृपेण । मुख्यकोशभवने मुख्ये प्रधाने कोशभवने द्रव्यगृहे । विनियुक्तौ कृतविनियोगौ अभूतामिति शेषः ॥

**तेन दैववशतः सुरपूर्व-**
**त्राणतः परिभवः किल लेभे ।**
**स्वामिनं तु पुर एकशिलाया**
**रामनाथमनुभेजतुरेतौ ॥ ५३ ॥**

**तेनेति** । तेन वीररुद्रनृपतिना । दैववशतः दुरदृष्टवशात् ।

सुरपूर्वत्राणतः सुरत्राणात् दिल्लीनगराधिपात् । परिभवः पराभवः । लेभे किल लब्धः किल 'डुलभष् प्राप्तौ' इत्यस्मात्कर्मणि लिट् । एतौ हरिहरबुक्कभूपालौ एकशिलायाः पुरः नगर्याः स्वामिनं रामनाथम् रामनाथाख्यम् अनु पश्चात् भेजतुः सिषेवाते ॥ ५३ ॥

शौर्यवान्पुनरुपेत्य समित्यां
पर्यबीभवदमुं स तदैतौ ।
तद्भटैरतिबलैः प्रगृहीतौ
उद्भटावपि च दैवबलेन ॥ ५४ ॥

शौर्यवानिति । शौर्यवान् शौर्यमस्यास्तीति शौर्यवान् । सः सुरत्राणः । अमुं रामनाथम् समित्यां युद्धे । पुनरुपेत्य पुनरागत्य । पर्यबीभवत् । परिभवं प्रापितवान् । तदा तस्मिन् काले । अतिबलैः अत्यन्तबलवद्भिः तद्भटैः सुरत्राणपदातिभिः । उद्भटावपि पराक्रमिणावपि । एतौ हरिहरबुक्कभूपौ । दैवबलेन गृहीतौ । बन्दीकृत्य धृतौ अभूतामिति शेषः ॥ ५४ ॥

प्रापितौ सपदि तैः सुरपूर्व-
त्राणराजिपतिसौधकपाटम् ।
स्थापितौ घनघनेन निशीथे
क्वापि तौ वरगुणौ निरगाताम् ॥ ५५ ॥

प्रापिताविति । सपदि त्वरया । तैः दिल्लीश्वरपदातिभिः । सुरपूर्वत्राणराजिपतिसौधकपाटं सुरपूर्वत्राणः सुरत्राणः स एव

वाजिपतिः अश्वपतिः। यथा नवलक्षधनुर्धरैः नरपतित्वं तथा अश्वपत्वै रपि नवलक्षाश्वकाधिपत्यं ज्ञेयम्। तत्सौधस्य तद्भवनस्य कपाटं द्वार-भागं प्रापितौ। घनघने मेघनिबिडे। निशीथे अर्धरात्रे स्थापितौ। तौ हरिहरबुक्कभूपौ। वरगुणौ सन्तौ। क्वापि न निरगातां न निर्गतौ॥ ५५॥

प्रातरैक्षत महान् स गृहीतौ
भ्रातरौ निजभटैः पुर एतौ।
नेतरत्र बत धावितवन्तौ
कातरावपि निशीति विमर्शी॥ ५६॥

प्रातरिति। महान् स वाजिपतिः। निजभटैः स्वकीयभटैः गृहीतौ। पुरः अग्रे। एतौ आगतौ। भ्रातरौ हरिहरबुक्कभूपौ निशि रात्रौ। कातरावपि भीरू अपि इतरत्र प्रदेशान्तरे। न धावितवन्तौ न पलायितवन्तौ। बतेति खेदे। इति इत्थं विमर्शी परामर्शवान् सन्। प्रातः ऐक्षत ईक्षितवान्॥ ५६॥

उत्तमत्वमनयोर्हृदयालुः
सत्यसन्धगुणयोः स दयालुः।
वित्तवान् सह बलेन तदाभ्यां
दत्तवान् विततदक्षिणदेशम्॥ ५७॥

उत्तमत्वमिति। तदा हृदयालुः सहृदयः। दयालुः दयावान्। सः अश्वपतिः। सत्यसंधगुणयोः अनयोः हरिहरबुक्कभूपयोः

उत्तमत्वम् । वित्तवान् ज्ञातवान् सन् । आभ्यां विततदक्षिणदेश-विस्तीर्णं दक्षिणं देशम् बलेन अश्वगजरथादिसमूहरूपेण । सह साकम् । दत्तवान् ददौ ॥ ५७ ॥

तन्निदेशमधिगम्य सगर्भ्यौ
अन्वितौ बहुबलेन सहर्षौ ।
चारुतेज उदितावथ कृष्णां
तेरतुस्त्वचिरगावुडुपेन ॥ ५८ ॥

तदिति । अथ अनन्तरम् । बहुबलेन अन्वितौ सहर्षौ संतोष-साहितौ । तन्निदेशम् अश्वरते राज्ञाम् । अधिगम्य प्राप्य । चारु-तेज उदितौ चारुणा मनोहरेण तेजसा प्रतापेन उदितौ उदयवन्तौ । अचिरगौ शीघ्रगामिनौ । तौ हरिहरबुक्कभूपौ उडुपेन प्लवेन । कृष्णां कृष्णवेणीं नदीम् । तेरतुः अवतीर्णौ । 'तॄ प्लवनतरणयोः' इत्यस्मा-ल्लिट् ॥ ५८ ॥

बल्लालक्षितिपालकेन विजितौ युद्धेन मध्ये महा-
वल्लीभृद्विपिनस्य चक्रतुरिमौ श्रान्त्योपदेशं चिरम् ।
निद्राणः सहमाङ्कतोहरिहरक्षोणीभृदेष क्षणं
भद्रं रेवणसिन्धुयोग्याधिगमः स्वप्नं तदाप्नोत्तराम् ॥

बल्लालेति । इमौ हरिहरबुक्कभूपौ । युद्धेन बल्लालक्षितिपाल-केन विजितौ पराजितौ । महावल्लीभृद्विपिनस्य महावल्लीः महती-

र्लताः बिभर्तीति महावल्लीभृत् तच्च तद्विपिनं च तस्य। मध्ये श्रान्त्या चिरमुपवेशं चक्रतुः कृतवन्तौ। तदा तत्काले सहजाङ्कगः सहजस्य बुक्कभूपस्य, अङ्कगः उत्सङ्गप्रदेशं गच्छन्। क्षणम् निद्राणः निद्रां कुर्वाणः एषः हरिहरक्षोणीभृत् भद्रं मङ्गलम्। रेवणसिद्धयोग्यधिगमस्वप्नं रेवणाख्यसिद्धयोगिनः अधिगमस्वप्नं प्राप्तिमिश्रं स्वप्नम्। आप्नोत्तराम् अतिशयेन प्राप्तवान्। शार्दूलविक्रीडितं वृत्तमुक्तम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदाङ्कितश्रीमन्नृसिंह-
भारतीकरकमलसंजातसकलविद्याविशारदपण्डितपुण्डरीक-
मण्डलीमार्तण्डश्रीसच्चिदानन्दभारतीस्वामिभि-
र्निर्मापिते विद्वद्बालकश्रीलक्ष्मणशास्त्रिविरचिते
**गुरुवंशे महाकाव्ये पञ्चमः सर्गः॥**



## षष्ठः सर्गः ॥

स्वस्तिश्रीमन्नृप तव भवेद्वीर सिंहासनश्रीः
विद्यारण्यप्रचुरकृपया सर्वसंरक्षणाय ।
विश्वोत्तुङ्गं विबुध कलयेश्चन्द्रमौलीशलिङ्गं
भाविक्ष्मेशास्त्रिगुणगणितैकादशाथ त्वदाद्याः ॥

अथ हरिहरभूपालाय रेवणासिद्धोक्तस्वप्नवाक्यानि श्लोकद्वयेनैकान्वयेन विविनक्ति—स्वस्तीति । स्वस्तिश्रीमन् मङ्गललक्ष्मीवन् । वीर हे नृप । सर्वसंरक्षणाय सर्वेषां संरक्षणाय । श्रीविद्यारण्यप्रचुरकृपया श्रीविद्यारण्यस्य विद्यारण्याचार्यस्य प्रचुरकृपया बहुलया कृपया दयया । सिंहासनश्रीः सिंहासनाधिपत्यरूपमैश्वर्यम् तव भवेत् । हे विबुध हे विद्वन् चन्द्रमौलीशलिङ्गम् कलयेः अवलोकयाः । अथ अनन्तरम् । भाविक्ष्मेशाः भविष्यन्तो भूपाः त्वदाद्याः त्वम् आद्यो येषां ते तथोक्ताः । त्रिगुणगणितैकादश त्रिरावृत्त्या गणिताः एकादश त्रयस्त्रिंशत्संख्याका इत्यर्थः, भवेयुरिति शेषः ॥ १ ॥

अग्रे भावी त्रिभुवननुतो वीरपूर्वो वसन्तः
सर्वामुर्वीं सुचिरमविता धार्मिकः सर्वथेति ।
उक्त्वा स्वप्ने हरिहरनृपं रेवणासिद्धयोगी-
डन्तर्धानं समभजदथ प्राबुधत्सोऽपि भूपः ॥

अग्रे तदनन्तरम् । भावी भविष्यन् । सर्वथा सर्वप्रकारैः धार्मिकः धर्मं चरन् । त्रिभुवननुतः लोकत्रयेऽपि स्तुतः । वीरपूर्वः वीरशब्दपूर्वकः वसन्तः वीरवसन्ताख्यः । सर्वाम् । उर्वीं भूमिम् । सुचिरं चिरकालम् । अविता रक्षिष्यति । इति स्वप्ने हरिहरनृपम् उक्त्वा । रेवणासिद्धयोगीट् रेवणासिद्धयोगीन्द्रः अन्तर्धानं समभजत् । अथ अनन्तरम् । सोऽपि भूपः हरिहरनृपः । प्राबुधत् प्रबुद्धोऽभूत् । सर्गेऽस्मिन्मन्दाक्रान्तावृत्तमुक्तम् ॥ २ ॥

**भ्रात्रेऽवादीद्धरिहरनृपः स्वप्नवृत्तं समस्तं**
**हर्षोत्कर्षं सह सहभुवा सोऽपि संप्राप शूरः ।**
**भग्नं सैन्यं तदपि नृपतेः सर्वमागात्समीपे**
**विद्यारण्याह्वयमुनिपमानन्ददं संददर्श ॥ ३ ॥**

भ्रात्र इति । हरिहरनृपः । समस्तं स्वप्नवृत्तम् । भ्राते अवादीत् उक्तवान् । शूरः शौर्यवान् हरिहरनृपः । सोऽपि भ्राता । बुक्कभूपः । सहभुवा सहजेन हरिहरमहाराजेन । सह हर्षोत्कर्षं संतोषातिशयम् संप्राप संप्राप्तवान् । नृपतेः हरिहरराजस्य । तदपि युद्धकालिकमपि भग्नं सर्वं सैन्यम् । समीपे आगात् । आनन्ददं हर्षप्रदम् । विद्यारण्याह्वयमुनिपं विद्यारण्य इत्याह्वयो यस्य स तथोक्तः मुनीन् पातीति मुनिपः तम् । संददर्श संदर्शनं चकार ॥ ३ ॥

**नत्वा स्तुत्वा यतिवरममुं सर्वथाशीर्वचोभिः**
**सार्कं लब्ध्वा तदनुमतिमप्याशु बल्लालभूपम् ।**

जित्वाक्रम्याखिलजनपदं पालयामासतुस्तौ
वल्मीकस्थं शुभमगमतां स्वर्णसिंहासनं च ॥ ४ ॥

नत्वेति । अमुं यतिवरम् विद्यारण्याचार्यम् । नत्वा नमस्कृत्य । स्तुत्वा स्तोत्रं कृत्वा । आशीर्वचोभिः आशीर्वादैः । साकं सह । तदनुमतिमपि । सर्वथा सर्वप्रकारेण । लब्ध्वा संप्राप्य । आशु शीघ्रम् । बल्लालभूपम् जित्वा पराभाव्य । अखिलजनपदं समस्तदेशम् आक्रम्य तौ हरिहरबुक्कभूपौ । पालयामासतुः । वल्मीकस्थं शुभं स्वर्णसिंहासनं च अगमतां प्राप्नुतान ॥ ४ ॥

शिष्टैर्जुष्टा प्रवहति सरिन्मङ्गला तुङ्गभद्रा
यत्रैतस्मिन्जगति नगरे हस्तिकोणाभिधाने ।
सन्तौ कान्तौ सपदि मृगया संविधित्सू कदाचि-
न्मान्यौ सैन्यैर्वनमगमतां श्वापदाक्रान्तमेतौ ॥

शिष्टैरिति । एतस्मिन् जगति । शिष्टैः आस्तिकैः ऋष्यादिभिः । जुष्टा सेविता । मङ्गला तुङ्गभद्रा सरित् नदी । यत्र यस्मिन् प्रवहति । तत्र हस्तिकोणाभिधाने नगरे । सन्तौ वसन्तौ । सदसि समायाम् । कान्तौ प्रकाशमानौ । सैन्यैः सेनाभिः । मान्यौ संभाव्यौ एतौ हरिहरबुक्कभूपौ । श्वापदाक्रान्तं श्वापदैः हिंस्रैः प्राणिभिः । आक्रान्तं वनम् । कदाचित् मृगयाम् आखेटम् । विधित्सू चिकीर्षू सन्तौ । अगमतां गतवन्तौ ॥ ५ ॥

मुक्ताः श्वानः सपदि मृगयाजीविभिस्तद्भटौघै-
र्धर्तुं धावच्छशमपि स तान्धावयामास तूर्णम् ।
चित्रं दृष्ट्वा तदिह विपिने विस्मितास्ते नितान्तं
वृत्तान्तं तं नृपतिवरयोः सर्वमेवोक्तवन्तः ॥ ६ ॥

मुक्ता इति । मृगयाजीविभिः मृगयया जीवन्तीति तच्छीला मृगयाजीविनः तैः । तद्भटौघैः तदीयशूरपदातिसमूहैः । धावच्छशमपि 'सृमरो गवयः शशः' इत्यमरः । धर्तुं श्वानः शुनकाः 'कौलेयकः सारमेयः शुनकः श्वा च कुक्कुरः' इति हलायुधः । मुक्ता अभूवन्निति शेषः । सः शशः । तान् शुनः तूर्णं धावयामास पलायनं कारितवान् । इह विपिने अस्मिन् वने । तत् चित्रम् आश्चर्यम् दृष्ट्वा । विस्मिताः साश्चर्याः । ते भटाः । नृपतिवरयोः हरिहरबुक्कभूपयोः । तं सर्वं वृत्तान्तम् नितान्तम् अतिशय यथा स्यात्तथा । उक्तवन्त एव ॥ ६ ॥

आकर्ण्यैतौ सकलमपि तं प्रोचतुः पार्थिवेन्द्रौ
विद्यारण्यं प्रथितयमिनं सोऽपि ताभ्यां सहैत्य ।
स्थानं दृष्ट्वा बलवदिति तद्राजधानीं विधातुं
चित्ते चक्रे नृपकुलभुवां भाविनां भूपतीनाम् ॥

आकर्ण्येति । एतौ पार्थिवेन्द्रौ हरिहरबुक्कभूपौ । सकलमपि तं वृत्तान्तम् । प्रथितयमिनं प्रसिद्धतापसम् । विद्यारण्य विद्यारण्याचार्यम् । प्रोचतुः उक्तवन्तौ । सोऽपि विद्यारण्याचार्योऽपि ।

-नाभ्यां भूनाभ्यां सह एत्य आगत्य । तत्स्थानं शशकारितशुनकप-
-लायनस्थानम् । बलवदिति दृष्ट्वा आलोच्य । नृपकुलभुवां राजवं-
शजनुष्मताम् । भाविनां भावः एषामस्तीति भविष्यन्ति इति च
भाविनः सरूपैकशेषः । तेषां भूपतीनाम् । हरिहरराजादीनाम् ।
राजधानीं राजानो धीयन्ते अत्रेति राजधानी तां विधातुं कर्तुम् ।
चित्ते चक्रे मनसा गोचरीचकार ॥ ७ ॥

**नागेष्वर्कैर्मित इह शके शालिवाहस्य याते**
**धात्रर्यब्दे शुभसमुचिते मासि वैशाखनाम्नि ।**
**शुक्ले पक्षे सुगुणपितृभे सूर्यवारे सुलग्ने**
**सप्तम्यां श्रीविजयनगरीं निर्ममे निर्ममेन्द्रः ॥ ८ ॥**

नागेष्विति । इह भूलोके । शालिवाहस्य शालिवाहननाम्नः
शके राज्यपरिपालनकाले । नागेष्वर्कैः नागाः गजाः अष्ट इषवो
बाणाः पञ्च अर्कः द्वादश एतैः अङ्कानां वामतो गतिरिति रीत्या
सहस्र द्विशतं अष्टपञ्चाशती (१२५८) याते गते सति । धातरि
धातृनामके अब्दे वर्षे । शुभसमुचिते शुभस्य मङ्गलस्य समुचिते
अर्हे । वैशाखनाम्नि मासे । शुक्ले पक्षे । सुगुणपितृभे सुष्ठु गुणाः
यस्मिन् । तत् तथोक्तम् । पितृभ पितृदेवताकं भं नक्षत्रं
मघाख्यं तस्मिन् । तथा च कालामृते— 'ऋक्षेशा अथ दस्र-
कालहुतभुक् ब्रह्मेन्दुरुद्रादितीज्यानागाः पितरः' इति । सूर्यवारे
सुलग्ने शुभलग्ने सप्तम्याम् । निर्ममेन्द्रः निर्ममाणां ममतारहितानाम्
अमशब्देन ममता लक्ष्यते । यद्यपि नगरनिर्माणं ममतारहितानां

नविरुद्धम् , तथापि शिष्यानुग्रहधर्माभिवृद्धिप्रयोजनकत्वात् न दोष इति समाधेयम् । एवमेवोक्तं पाञ्चरात्रेऽपि— 'माठपत्यं यतिः कुर्याद्विष्णुधर्माभिवृद्धये' इति । तेषां ज्ञानिनाम् इन्द्रः श्रेष्ठः विद्यारण्याचार्यः । विजयनगरीं निर्ममे निर्मापितवान् । अन्तर्भावितण्यर्थोऽत्र माङ् धातुः तस्मात् लिट् । रामेण बद्धः सेतुरितिवत् ॥ ८ ॥

**द्वारैः स्फारैर्नवभिरुदिता भूर्युपद्वारयुक्ता**
**विस्तारायत्युभयविधया योजनद्वन्द्वमाना ।**
**उर्व्यां सर्वाः प्रथितनगरीर्यज्जयत्येव तस्मात्**
**ख्याता नाम्ना विजयनगरी चक्रराजाकृतीड्या ॥**

द्वारैरिति । नवभिः नवसंख्यैः । द्वारैः । उदिता उदयवती । भूर्युपद्वारयुक्ता भूरिभिः उपद्वारैः युक्ता । विस्तारायत्युभयविधया विस्तारः विशालता आयतिः दैर्घ्यं तयोरुभयं तस्य विधया प्रकारेण । उभयमित्यत्र 'उभदुदात्तो नित्यम्' इत्ययच् । उक्तं च तत्सूत्रे कैयटेन— नित्यग्रहणस्य प्रयोजनं वृत्तिविषये उभशब्दप्रयोगो माभूत् । उभयशब्दस्यैव यथा स्यादिति कालिदासोऽप्येवमेव प्रायुङ्क्त । 'शय्यां जहत्युभयपक्षविनीतनिद्राः' । योजनद्वन्द्वमाना योजनद्वन्द्वं मानं परिमाणं यस्याः सा तथोक्ता । चक्रराजाकृतीड्या चक्राणां देवतायन्त्रविशेषाणां राजा चक्रराजः, श्रीचक्रं तस्य आकृत्या आकारेण ईड्या स्तुत्या विजयनगरी । यद्यस्मात्कारणात् उर्व्यां भूमौ सर्वाः प्रथितनगरीः प्रसिद्धपुरीः जयति

परामावयति, तस्मादेव नाम्ना विजयेत्यभिधानेन ख्याता प्रसिद्धा अभूदिति शेषः ॥ ९ ॥

चारुद्वारां कनकमुकुटौघाग्रनिर्भेदितस्व-
र्गङ्गाभङ्गैः परित इह पुर्यन्तराक्रान्तलीलैः ।
यस्यां पौराभिलषिततलासन्नभृत्तुङ्गभद्रा-
कुल्यावत्यां समभजदिवान्वर्थतां गोपुराख्या ॥

चार्विति । यस्याम् इह पुरि विजयपुर्याम् । अन्तराक्रान्तलीलैः अन्तः मध्यतः परितः समन्तात् आक्रान्ता लीला येषां तैः तथोक्तैः । चारुद्वारां मनोहराणां द्वाराणाम् । 'स्त्रीर्द्वार्द्वारं प्रतीहारः' इत्यमरः । कनकमुकुटौघाग्रनिर्भेदितस्वर्गङ्गाभङ्गैः कनकमुकुटौघस्य सुवर्णशिखरसमूहस्य अग्रैः निर्भेदितायाः विदीर्णायाः स्वर्गङ्गायाः आकाशगङ्गायाः भङ्गैः तरङ्गैः 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः । पौराभिलषिततलासन्नभृत्तुङ्गभद्राकुल्यावत्यां पौराणां नागरिकाणाम् अभिलषितान् तलेषु स्थलविशेषेषु आसन्नान् भृतः भरन्त्याः तुङ्गभद्रायाः कुल्यावत्यां अल्पकृत्रिमसरिद्वत्याम् । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । गोपुराख्या गोपुरमिति नाम, 'पुरद्वारं तु गोपुरम्' इत्यमरः । अन्वर्थताम् अनुगतार्थवत्त्वम् । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः' इत्यमरकोशात् गोशब्दस्य स्वर्गार्थकत्वेन तत्संबद्धपुराभिप्रायः प्रतीयते । समभजदिव संसेवितवतीव । अत्रोदितस्थलेषु

आसक्तायाः तुङ्गभद्राकुल्यायाः द्राग्मुकुटभेदेन संप्राप्तस्वर्गङ्गान्तरङ्गत्वेनातिशयोक्तिश्च ॥ १० ॥

यस्यां सन्तो वरपुरि चतुर्वेदितां संभजन्ते
यान्त्येवं तां विसरदजिराः सर्वशाला विशालाः ।
वीथ्यः पृथ्व्यः प्रमिलितचतुर्वेदशाखोपशाखा-
साम्यं रम्यं दधति विशतां दुर्गमा निर्गमाय ॥

**यस्यामिति** । यस्यां वरपुरि विजयनगर्याम् सन्तः सज्जनाः । चतुर्वेदितां चत्वारो वेदाः येषां सन्ति ते चतुर्वेदिनः तेषां भावः तत्ता ताम् । संभजन्ते प्राप्नुवन्ति । एवं विसरदजिराः विसरन्ति विस्तृतानि अजिराणि अङ्गणानि । 'अङ्गणं चत्वराजिरे' इत्यमरः । यासां ताः । विशालाः सर्वशालाः समस्तगृहाणि तां चतुर्वेदितां यान्ति । विशतां प्रविशताम् । निर्गमाय बहिर्गमनाय दुर्गमाः दुर्ज्ञेयाः पृथ्व्यः विस्तीर्णाः वीथ्यः रम्यं मनोहरम् । प्रमिलितचतुर्वेदशाखोपशाखासाम्यं प्रमिलिताभिः चतुर्वेदानां शाखोपशाखाभिः साम्यम् औपम्यम् । दधति धारयन्ति । वेदानां शाखाबाहुल्यं च महाभाष्ये पस्पशाह्निके उक्तम् । 'एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः । एकविंशतिधा बाह्वृच्यम् । नवधा आथर्वणो वेदः' इति चतुर्वेदिशब्दे वेदवेदिशब्दाभ्यामर्थद्वयं बोध्यम् ॥

हस्त्यादानक्षमपथ नरैः पादचारैः समन्ताद्-
श्वारोहैरपि हरिवरारोहिभिर्वस्तुजातम् ।

संबिभ्रत्योर्विलसदुपकार्यालिहृद्या निषद्या-
देवानुर्व्यागमन इव निःश्रेणयः प्रीणयन्ति ॥

हस्तादानेति। विलसदुपकार्यालिहृद्याः विलसन्तीभिः उपकार्याणा उपकारिकाणाम् । 'उपकार्योपकारिका' इत्यमरः। आलिभिः आव-लिभिः हृद्याः हृदयंगमाः । पादचारैः चरणसंचारिभिः नरैः । हस्तादानक्षमं हस्तेन आदानस्य ग्रहणस्य क्षमं समर्थम् । अथ अश्वारोहैः अश्वोपरिस्थैरपि । करिवरारोहिभिः गजवर्यारूढैरपि । तथाविधं वस्तुजातं वस्तुसमूहं । संबिभ्रत्यः धारयन्त्यः । निषद्याः आपणाः । उर्व्यागमने भूलोकागमनविषये निःश्रेणय इव अधि-रोहिण्य इव । 'निःश्रेणिस्त्वधिरोहिणी' इत्यमरः । देवान् प्रीणयन्ति सतोषयन्ति । 'प्रीञ् तर्पणे' इत्यस्माल्लट् । धूञ्प्रीञोर्नुग्वक्तव्य इति नुगागमः ॥ १२ ॥

रूपं प्रापद्बहुतरमिह श्रीविरूपाक्षदेवो
यस्माद्यस्यां स्वयमपि चिरं राजराजो विरेजे ।
पण्येशानाममितधनिनामभ्युपेत्याकृतीस्ता
युक्तं व्यक्तं भवति महतां मित्रकार्यानुरूप्यम् ॥

रूपमिति । इह अस्यां नगर्याम् । श्रीविरूपाक्षदेवः । बहुतरं रूपं यस्मात् प्रापत् प्राप्तवान् । तस्माद्राजराजः कुबेरः । स्वयमपि अमितधनिनां अपरिमितधनवतां । पण्येशानां पण्यानां ईशाः महा-वणिजः तेषां आकृतीः आकारान् अभ्युपेत्य अङ्गीकृत्य चिरं विरेजे

प्रकाशितवान्। तथा हि। महतां व्यक्तं स्पष्टं मित्रकार्यानुरूप्यं मित्राणां सुहृदां कार्येषु आनुरूप्यं समानरूपत्वं युक्तं भवति। त्र्यम्बकसखात्वात् कुबेरेणापि सहाकारत्वमङ्गीकृतमिति भावः। हेतूत्प्रेक्षागर्भवस्तूत्प्रेक्षा संकीर्णार्थान्तरन्यासः ॥ १३ ॥

**यस्यां हर्म्योपरि कुवलयाक्ष्यो नितान्तं रतान्ते**
**व्यत्यस्तालंकृतिरुचिमुखं वीक्षितुं चन्द्रबिम्बम्।**
**आदित्सन्ते सुमुकुरधिया छिन्नहारालिमुक्ता-**
**बुद्ध्या ताराः परित उदिताः संविधित्सन्ति राशिम्॥**

यस्यामिति। यस्यां नगर्याम्। हर्म्योपरि हर्म्याणामुपरिष्टात्। कुवलयाक्ष्यः उत्पलनयनाः रतान्ते सुरतान्तकाले। व्यत्यस्तालंकृतिरुचि व्यत्यस्ताः विपर्यस्ताः अलंकृतीनां अञ्जनकुङ्कुमहरिद्रादीनां रुचयः कान्तयो यत्र तथोक्तं तम्। मुखं वीक्षितुम् आलोकितुम्। चन्द्रबिम्बं चन्द्रमण्डलम्। सुमुकुरधिया सुशुद्दर्पणमिति मत्या नितान्तम् अतिशयेन आदित्सन्ते गृहीतुमिच्छन्ति। छिन्नहारालिमुक्ताबुद्ध्या छिन्नाः रतिकालछिन्नाः याः हारालयः मुक्तामणिमालाश्रेणयः तन्मुक्ता इति बुद्ध्या परितः समन्तात् उदिताः उदयवतीः। ताराः नक्षत्राणि। राशिं पुञ्जम्। संविधित्सन्ति संविधातुमिच्छन्ति। मुखदिदृक्षूणाम् उत्थातुमिच्छायाः चतुर्थयाम एव संभवात् तत्कालरतिप्रीताः इमाः पद्मिन्य एवेति ज्ञेयम्। तदुक्तं रतिरहस्ये—'रमयति रमणीयां पद्मिनीमग्रयामे' इति। तल्लक्षणं चानङ्गरङ्गे 'प्रान्तारक्तकुरङ्गशावनयना पूर्णेन्दुतुल्यानना पीनो-

तुङ्गकुचा शिरीषमृदुला स्वल्पाशना दक्षिणा । फुल्लाम्भोजसुगन्धिकामसलिला लज्जावती मानिनी श्यामा कापि सुवर्णपङ्कजनिभा देवादिपूजारता । उन्निद्राम्बुजकोशतुल्यमदनच्छत्रा मरालस्वना तन्वी हंसवधूगतिः सुललितं वेषं सदा बिभ्रती । मध्यं चारु वलित्रयाङ्कितमसौ शुक्लाम्बराकाङ्क्षिणी सुग्रीवा शुभनासिकेति गदिता नार्युत्तमा पद्मिनी ।' इति । अलंकृतिरुचीनां व्यत्यासश्चुम्बनपरिभेदात् । तत्स्थानानि च रतिरहस्ये— 'नयनयुगलकपोलं दन्तवासो मुखान्तः स्तनयुगलललाटं चुम्बनस्थानमाहुः' इति । निमितकस्फुरितकादिचुम्बनभेदास्तत्रैव ज्ञेयाः । रतिविशेषाच्च उत्तानकासितरतिषु हि कूर्मपद्मनागरिकसंयमनाद्यासनभेदेषु प्रायेण सर्वावयवमेलनात् भूतालंकाराणां व्यत्यासो बोध्यः । उक्तं च स्मरदीपिकादौ— 'भुजयोर्भुजमाननतो वदनं जङ्घामभिजङ्घमसौ रमते । विन्यस्य नरो यदि कौर्ममिदमिति । जंघायुगलस्य विपर्ययतः पद्मासनमुक्तमिदं करणमिति । ऊरुमूलोपरि न्यस्य योषिदूरुद्वयं यदि ग्रीवां धृत्वा कराभ्यां तु बन्धो नागरिको मत इत्यादि । मुक्ताहारविस्रंसनं च विशत इव मिथोऽङ्गे क्षीरनीरं तदाहुरित्याद्युक्तक्षीरनीरातिलतण्डुलाद्यालिङ्गनपरिभेदाद्यपि ज्ञेयम् । इदं च रतं स्वीयानामभिसारिकाभेदपरकीयाणां सामान्यवनितानां तिसृणां समानम् । तल्लक्षणानि रसमञ्जर्यादौ द्रष्टव्यानि । विस्तरभिया नेह लिख्यन्ते । भ्रान्त्यलंकारः ॥ १४ ॥

**यस्यां हर्म्योपरि मृगदृशां वक्त्रशोभाजितेन्दुः**
**क्रीडान्तेऽभूच्छ्रमहृतिकृते साधु शुश्रूषुरेत्य ।**

व्रीडाकालानुचितपुरुषायानविन्तत्प्रहार-
स्फूर्जद्वेणिस्फुटमृगमदश्रीयुतो लाञ्छितोऽभूत् ॥१५॥

यस्यामिति । यस्यां नगर्याम् । हर्म्याणाम् उपरि उपरिष्ठात् । मृगदृशां मृगस्य दृशाविव दृशौ यासां ताः तथोक्ताः तासाम् । वक्त्रशोभाजितेन्दुः मुखकान्त्या पराभूतचन्द्रः । क्रीडान्ते सुरतान्ते । श्रमहृतिकृते श्रमपरिहारार्थम् । एत्य आगत्य साधु शुश्रूषुः सुष्ठु सेवकः सन् । व्रीडाकालानुचितपुरुषायानविन्तत्प्रहारस्फूर्जद्वेणिस्फुटमृगमदश्रीयुतः व्रीडाकाले लज्जासमये अनुचितं पुरुषायानं पुरुषागमनं येत्रीणां तासां प्रहारेण स्फूर्जयन्त्याः ध्वनयन्त्याः वेण्याः स्फुटया स्पष्टया मृगमदश्रिया कस्तूरीकान्त्या युतः संबद्धः लाञ्छितः अङ्कितः अभूत् । इह चन्द्रापनेयश्रममूलरतौ चण्डवेगः प्रतीयते । उक्तं च रतिरहस्ये— 'वीर्यं बहुक्षताघातसहत्वं रतिलोलता । चण्डवेगस्य चिह्नानि' इति । क्रीडाकालागतपुरुषस्य तत्कालेऽपि प्रहारसाहसात् प्रगल्भात्वं प्रतीयते । प्रसन्नीकर्तुं सेवापरस्य चन्द्रस्य प्रहारलाभात् विषमालंकारः । 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति । चन्द्राङ्कस्य मृगमदत्वेन उत्प्रेक्षणात् वस्तूत्प्रेक्षा । वेण्यामपि मृगमदधारणेन ऐश्वर्यातिशयः सूचितः ॥ १५ ॥

इज्याशीलैर्विलसति पुरे यत्र यागानलोत्थं
धूमं दृष्ट्वा घन इति मुखं चातकः स्वं विकास्य ।
प्रासादाग्रध्वजपुटसपाघातनिर्भेदितस्व-
गङ्गाभङ्गैर्निपतितपयोबिन्दुरानन्दमेति ॥ १६ ॥

इज्याशीलैरिति । इज्याशीलैः यायजूकैः विलसति प्रकाशमाने । यत्र पुरे यस्मिन् विजयनगरे । यागानलोत्थं यागाग्निसंभवं धूमम् । दृष्ट्वा । चातकः घन इति मेघः इति स्वं स्वकीयम् । मुखं वदनम् । विकास्य व्यादाय । प्रासादाग्रध्वजपुटसमाघातनिर्भेदितस्वर्गङ्गाभङ्गैः प्रासादाग्रस्थितानां ध्वजानां पुटैः मुखैः समाघातेन निर्भेदितायाः स्वर्गङ्गायाः भङ्गैः तरङ्गैः निपातितपयोबिन्दुः निपातिताः पयोबिन्दवः जलबिन्दवः यस्य स तथोक्तः सन् आनन्दं संतोषम् एति प्राप्नोति । पुटशब्दस्य मुखार्थकत्वं माघकाव्ये प्रयुक्तम् । 'शैलस्य दर्दुरपुटानिव वादयन्ते' इति । भ्रान्त्यलंकारः, विभावना च ॥ १६ ॥

यस्याः पुर्या उदितमुदरे चित्रकृच्चित्ररूपं
नूत्नै रत्नैर्विलसतितरां सौधमब्जासनेन ।
भूम्यां रम्यं निरुपमगुणं स्थानमेतावदेवे-
त्यर्थं नृणामवगमयितुं सालसंवेष्टितं किम् ॥

यस्या इति । यस्याः पुर्याः । उदरे उदितम् उत्पन्नम् । नूत्नैः नवीनैः रत्नैः मणिभिः चित्ररूपं चित्ररूपवत् चित्रकृत्सौधं राजगृहम् अब्जासनेन ब्रह्मणा । भूम्याम् एतावदेव स्थानम् । निरुपमगुणं रम्यं रमणीयमित्यर्थः । नृणाम् अवगमयितुं ज्ञापयितुं सालसंवेष्टितं प्राकारपरिवेष्टितम् विलसतितरां किम् । प्राकारवेष्टनस्य रम्यस्थानपरिमाणे बोधनोत्प्रेक्षा ॥ १७ ॥

विद्यारण्याभिधयतिपतेश्चारुकीर्तिप्रचारात्
श्रावं श्रावं नगरसुषुमां तोषतः शेष उर्वीम् ।
भित्त्वोत्थाय स्वनिखिलफणा विस्तृणन्पश्यतीवे-
त्याभात्युद्यद्वरणपरितोमञ्जरीप्रेक्षकाणाम् ॥

**विद्यारण्येति** । शेषः फणीन्द्रः । विद्यारण्याभिधयतिपतेः । चारुकीर्तिप्रचारात् । नगरसुषुमां नगरस्य परमां शोभाम् । श्रावं श्रावं श्रुत्वा श्रुत्वा । तोषतः संतोषात् । उर्वीं भूमिम् । निर्भिद्य उत्थाय । स्वनिखिलफणाः स्वाः स्वकीयाः निखिलाः समग्राः फणाः विस्तृणन् विस्तारयन् । पश्यतीव । इति उद्यद्वरणपरितो-मञ्जरीप्रेक्षकाणाम् उद्यतः वरणस्य प्राकारस्य परितः समन्तात् मञ्जर्यः तासां प्रेक्षकाणां द्रष्टॄणाम् आभाति भासते । प्राकारमञ्जर्याः फणात्वेन उत्प्रेक्षा ॥ १८ ॥

वामे हस्ते हृषितशयितक्षोणिवध्वाप्तवत्या
शेषाद्भूषां तदनु विबुधेशाच्च तल्लिप्सयेव ।
दक्षं बाहुं नृपगृहमयं सामि विस्तारयन्त्या
यत्राप्तोऽभूद्वरणमिषतः पारिहार्यो नगर्याम् ॥ १९ ॥

**वाम इति** । यत्र यस्यां नगर्याम् । शेषात् फणीन्द्रात् । वामे हस्ते । भूषाम् अलंकारम् । आप्तवत्या प्राप्तवत्या हृषितशयित-क्षोणिवध्वा संतुष्टया शयानया भूम्यङ्गनया । विबुधेशात् देवेन्द्रा-दपि । तल्लिप्सया तस्याः भूषायाः लब्धुमिच्छयेव । नृपगृहमयं

राजभवनात्मकम् । दक्षं दक्षिणबाहुम् । भुजं सामि अर्धम् । विस्तारयन्त्या प्रसारयन्त्या । वरणामिषतः प्राकारच्छलात् पारिहार्यः कटकः 'आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्' इत्यमरः । आसः प्राप्तः अभूत् । संतोषात् शयना भूम्यङ्गना शयानप्रसारितवामबाहुकङ्कणानुरूपगृहात्मकदक्षिणबाहुमिन्द्रं प्रति कङ्कणलाभेच्छया प्रसारयन्ती एतद्राजसदनादेव नवरत्नमयप्राकाररूपकङ्कणं प्राप्तवतीति भावः । अनेन स्वर्गपर्यन्तं राजभवनस्य औन्नत्यं प्रतीयते । वस्तूत्प्रेक्षा. कैतवापह्नुतिश्च ॥ १९ ॥

**निर्मायैनां नरपतिमहाराज्यसिंहासनेऽस्मिन्**
**सद्भक्तश्रीहरिहरविभोस्तस्य पट्टाभिषेकम् ।**
**कर्तुं मैत्रावरुणिमुनिपो रामचन्द्रस्य यद्व-**
**त्संभारार्थं सकलसचिवान्योगिराजो न्यदिक्षत् ॥**

**निर्मायेति** । एनां विजयनगरीम् । निर्माय । अस्मिन् नरपतिमहाराज्यसिंहासने प्रागुक्तवल्मीकसंप्राप्तसिंहासने । तद्धि नर्मदोत्तरसर्वदेशस्वामिनरपतियोग्यमहाराज्याधिपत्यप्रकाशकं कालदोषात् भूगतमासीदिति नृपग्रन्थेषु प्रसिद्धम् । तस्य सद्भक्तश्रीहरिहरविभोः सद्भक्तस्य श्रीमतो पट्टाभिषेकं कर्तव्यं कर्तुं रामचन्द्रस्य मैत्रावरुणिमुनिपः वसिष्ठः यद्वत् तद्वत्संभारार्थम् अभिषेकसामग्रीसंपादनार्थम् । सकलसचिवान् समस्तमन्त्रिणः प्रतियोगिराजः योगिनां राजा योगिराजः । 'राजाहः सखिभ्यष्टच्' इति

टच । विद्यारण्यः न्यदिक्षत् आज्ञतवान् । 'नि पूर्वात् दिश अतिसर्जन' इत्यस्माल्लुङ् । शलइगुपधादनिट इति च्लेः क्सादेशः ॥ २० ॥

**आभूष्यन्तां सपदि सपदि सकला वीथयः श्रीनगर्यां**
**पौरागाराण्यपि च रुचिरैस्तोरणैः सद्वितानैः ।**
**संसिच्यन्तां सुरभिसलिलै राजमार्गाः समन्ता-**
**दाबध्यन्तां सुरगिरिसमुत्तुङ्गचारुध्वजाद्याः ॥ २१ ॥**

आभूष्यन्तामिति । सपदि सत्वरम् । श्रीनगर्यां श्रीयुक्तायां नगर्याम् । सकला वीथयः आभूष्यन्ताम् आसमन्तादलंक्रियन्ताम् । पौरागाराण्यपि सद्वितानैः रुचिरैः तोरणैः आभूष्यन्तामिति शेषः । राजमार्गाः सुरभिसलिलैः परिमलोदकैः । समन्तात् संसिच्यन्ताम् । सुरगिरिसमुत्तुङ्गचारुध्वजाद्याः सुरगिरिवत् मेरुवत् समुत्तुङ्गाः चारवः ध्वजाद्याः ध्वजपताकादयः । आबध्यन्तां भवद्भिरिति शेषः । 'भूष अलंकारे' 'षिच क्षरणे' 'बद्ध बन्धने' एतेभ्यः कर्मणि लोट् दीपकालंकारः ॥ २१ ॥

**आकार्यन्तां धरणिपतयस्तत्तदर्हैरमात्यै-**
**राधाप्यन्तामपि विधिविदः कोविदा क्षोणिदेवाः ।**
**संनह्यन्तां पुरि करिवराः किंच रङ्गत्तुरङ्गा**
**भो भो छात्राः प्रभवतु शुभं गीतनृत्यादिसर्वम् ॥**

आकार्यन्तामिति । भो भो छात्राः शिष्याः तत्तदर्हैः तेषां तेषां अर्हैः योग्यैः । अमात्यैः । धरणिपतयः भूपतयः । आकार्यन्तां आहूताः क्रियन्ताम् । अपि च विधिविदः विधिज्ञाः कोविदाः बुधाः क्षोणिदेवाः ब्राह्मणाः । आयाप्यन्ताम् आगम्यन्ताम् । पुरि विजयनगरे करिवराः गजश्रेष्ठाः संनह्यन्तां संनद्धाः क्रियन्ताम् । किं च तुरङ्गाः संनह्यन्तामिति शेषः । गीतनृत्यादि सर्वम् । शुभं मङ्गलम् । प्रभवतु प्रकर्षेण जायताम् ॥ २२ ॥

संपूर्यन्तां जलधिसलिलैः शातकुम्भीयकुम्भाः
संपाद्यन्तां मिलदवयवव्याघ्रचर्मादयश्च ।
आधूप्यन्तां नरपतिसभान्यप्यगर्वादिधूपै-
रादीप्यन्तां नवमणिमयैर्वेदिका भूरिदीपैः ॥ २३ ॥

संपूर्यन्तामिति । जलधिसलिलैः समुद्रोदकैः । शातकुम्भीकुम्भाः सौवर्णकलशाः संपूर्यन्तां सम्यक् पूर्णाः क्रियन्ताम् । मिलदवयवव्याघ्रचर्मादयश्च मिलन्तः संगताः अवयवाः यस्मिन् तत् तथोक्तं व्याघ्रचर्म साङ्गं व्याघ्रचर्मेत्यर्थः । तदेव आदिः येषां ते आदिपदेन सिंहासनोपधानगण्डकादयो गृह्यन्ते । संपाद्यन्तां संगृह्यन्ताम् । नरपतिसभान्यपि राजसभा अपि । सभाराजामनुष्यपूर्वेत्यत्र राजपर्यायाणामेव ग्रहणस्य मूलग्रन्थारूढत्वात् नरपतिशब्दोत्तरसभाशब्दो नपुंसकः । अगर्वादिधूमैः अगरुश्रीगन्धादिधूपैः । आधूप्यन्तां समन्तात् धूपिताः क्रियन्ताम् । नवमणिमयैः नवरत्नमयैः । भूरिदीपैः बहुदीपैः वेदिकाः वितर्दिकाः । आदीप्यन्तां समन्तात्

प्रकाश्यन्ताम् । 'पुरी आप्यायने' 'पिट्ठ गतौ' 'धूपसंतापे' 'दीपी दीप्तौ' एभ्यः कर्मणि लोट् ॥ २३ ॥

आधाप्यैवं ससचिवगणात्सर्वमानाय्य चेष्टं
शान्त्याद्यं तद्विहितमखिलं कारयित्वा द्विजेन्द्रैः ।
राजानं तं प्रथमदिवसे सन्महिष्या समेतं
श्रीपम्पेशं हृदि दधतमाधापयच्चोपवासम् ॥ २४ ॥

अधाप्येति । सः विद्यारण्याचार्यः । सचिवगणात् अमात्यसमूहात् । सर्वं पूर्वोक्तं समस्तम् । एवम् आधाप्य कारयित्वा । इष्टम् अपेक्षितं वस्तु । आनाय्य समीपं प्रापय्य । द्विजेन्द्रैः ब्राह्मणश्रेष्ठैः । विहितं पट्टाभिषेकम् । विध्युक्तम् अखिलं समस्तम् तत् प्रसिद्धं शान्त्याद्यं होमपारायणजपादिकम् । कारयित्वा प्रथमदिवसे पट्टाभिषेकात्पूर्वदिवसे । श्रीपम्पेशं श्रीविरूपाक्षेश्वरम् । हृदि हृदये । दधतं धारयन्तम् । सन्महिष्या पट्टाभिषेकार्हया स्त्रिया समेतं युक्तम् । तं राजानं हरिहरराजम् । उपवासं अभोजनं आधापयति कारितवान् ॥ २४ ॥

तस्मै श्रीमद्धरिहरमहाराजनाम्ने हितं त-
च्छात्रा यात्रप्रचुरयशसे श्रेयसे भूयसे च ।
विद्यारण्याह्वयगुरुवरश्चारुपट्टाभिषेकं
चक्रे शक्रोपमगुणभृते निर्जराचार्यकल्पः ॥

तस्मा इति । अत्र अस्मिन् विजयनगरे, निर्जराचार्यकल्पः सुरा-चार्यसदृशः । कल्पशब्द इवार्थकः । बन्धुश्रीरसुहृद्‌दादिकल्पः प्रख्यः समप्रभः । देशीदेश्यदिप्रभसंकाशाद्या इवार्थकाः' इत्युक्तत्वात् । अयं विद्यारण्यनामकगुरुश्रेष्ठः । शक्रोपमगुणभृते इन्द्रसदृशगुणधारिणे प्रचुरयशसे प्रचुरं बहु यशः यस्य स तथोक्तः तस्मै श्रीमद्धरिहरमहाराजनाम्ने । छात्राय शिष्याय हितं इष्टम् । हितशब्दप्रयोगेति चेत् वार्तिकाचतुर्थी । भूयसे बहुतराय श्रेयसे धर्मविशेषाय । चारु मनोहरं यथा स्यात् तथा पट्टाभिषेकं राज्याभिषेकम् । चक्रे कृतवान् । उपमालंकारः ॥ २५ ॥

स्वस्तिश्रीमन्नरपतेरस्य सेवां वितेनु-
र्मान्यान्ये धरणिपतयो धन्यतां मन्यमानाः ।
पुण्यैराप्यं सविधमुचितं प्राप्य देदीप्यमाना
नामं नामं बभुरथ यथा देवराजस्य देवाः ॥ २६ ॥

स्वस्तीति । अथ अनन्तरं । मान्याः पूज्याः । अन्ये धरणिपतयः भूपतयः । धन्यता मन्यमानाः सन्तः । स्वस्तिश्रीमन्नरवरपतेः मङ्गललक्ष्मीवतो नूतननरपतेः अस्य हरिहरराजस्य सेवां वितेनुः कृतवन्तः । पुण्यैराप्यं प्राप्यम् । उचितं युक्तम् । अस्य सविध समीपं प्राप्य देदीप्यमानाः सन्तः । नामं नामं नत्वा नत्वा, देवराजस्य इन्द्रस्य सविधं प्राप्य । देवा यथा बभुः बभासिरे तद्वद्बभुरित्यर्थः । उपमालङ्कारः ॥ २६ ॥

हर्षोत्कर्षाद्धरिहरमहाराजराजस्य शीर्षे
तस्मिन्काले व्यरुचि विबुधैः पुष्पवृष्टिर्यथेष्टम् ।
स्वीयो राजा भजति समुपेत्यातपत्रात्मनेति
प्राप्तास्तारा उपनृपमिवैतानि पुष्पाणि रेजुः ॥ २७ ॥

हर्षेति । तस्मिन् काले पट्टाभिषेककाले । हर्षोत्कर्षात् संतोषाधिक्यात् । हरिहरमहाराजस्य । शीर्षे शिरसि । विबुधैः विद्वद्भिः । पुष्पवृष्टिः पुष्पानां वृष्टिः । यथेष्टं यथा स्यात्तथा । व्यरचि विरचिता । 'रच प्रतियत्न' इत्यस्माद्विपूर्वकात् कर्मणि लुङ् चिण् । उपनृपं नृपतिसमीपे । एतानि पुष्पाणि । आतपत्रात्मना छत्ररूपेण । स्वीयः स्वकीयः । राजा चन्द्रः । समुपेत्य भजति सेवते । इत्येवं प्रकारेण आलोच्य इति शेषः । प्राप्ता आगताः तारा इव नक्षत्राणीव । रेजुः प्रचकाशिरे । वस्तूत्प्रेक्षा मूलकवस्तूत्प्रेक्षा ॥ २७ ॥

श्रीमद्भूमीश्वरकुलपतेर्भाति रत्नाभिषेके
नानारत्नान्यसमसदसि व्याप्तवन्त्युज्ज्वलानि ।
तत्तत्कालोचितनवरसा नूनमन्तः प्रपूर्णा
नानावर्णा बहिरपि बभुर्निःसृता विष्वगस्य ॥ २८ ॥

श्रीमदिति । श्रीमद्भूमीश्वरकुलपतेः राजसमूहाधिपतेः । असमसदसि असदृशसभायाम् । रत्नाभिषेके भाति सति प्रकाशमाने सति । व्याप्तवन्ती व्याप्तानि । उज्ज्वलानि दीप्तानि । नाना बहुप्रकाराणि । रत्नानि अस्य राज्ञः अन्तः हृदये । प्रपूर्णाः तत्तत्कालोचितनवरसाः

तत्तत्कालेषु तेषु तेषु कालेषु उचिताः युक्ताः रसाः शृङ्गारादयः । बहिरपि हृदयभागेऽपि । विष्वक् समन्तात् निःसृताः निर्गताः बभुः बभासिरे। नूनमित्युत्प्रेक्षायाम्। नवरत्नानां च वर्णाः रत्नशास्त्रे उक्ताः। 'श्वेता रक्ता तथा पीता कृष्णा छाया चतुर्विधा । विप्रक्षत्रियवैश्यानां शूद्रजातेर्यथाक्रमम् ।' इति वज्रस्य वर्णाः । शीतांशुबिम्बसंकाशं मौक्तिकं स्निग्धमुच्यते' इति मुक्ताफलस्य वर्णः । छाया स्यात्पद्मरागस्य रक्तकोकनदप्रभेति माणिक्यवर्णः । नीलाञ्जनसमच्छायेति इन्द्रनीलस्य वर्णः । सिताभ्रधूमसंकाशमपि कृष्णं सितं च यत् । वैडूर्यं नाम तत्प्रोक्तं रत्नवर्णपरीक्षकैः इति वैडूर्यस्य वर्णः । बर्हिः पिञ्छसमाभासं चाषपक्षसमप्रभम् । शुकपिञ्छसमं कान्त्या तथा शैवलसंनिभम् । खद्योतोपमसंकाशं वारिकोलाङ्कसंनिभम् । नवशाद्वलसंकाशं शिरीषकुसुमोपमम् । एवमष्टौ समाख्याता छाया मरकतस्य च । इति मरकतस्य वर्णाः । मधुबिन्दुसंकाशं चापि गोमूत्राज्यसमप्रभम् । गोमेधिकं समाख्यातं रत्नं सोमसमर्द्धभुजा' इति गोमेधिकवर्ण. । सेतुसागरमध्ये तु जायते वल्लरी हि सा । विद्रुमाख्या सुरक्ताभा दुर्लभा रत्नरूपिणी । बालार्ककिरणा रक्ता सागरे सलिलोद्भवा । इति प्रवालस्य वर्णः । अहस्करहरिच्छायं स्वच्छकान्तिमनोहरम् । पुष्यरागमिति ख्यातं रत्नवर्णपरीक्षकैः' इति पुष्यरागस्य वर्णः । एवं नवरत्नानां वर्णाः । नवरसानां वर्णास्तु—'उत्तमः प्रकृतिः प्रायो रसः शृङ्गार इष्यते । स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदेवतः' इति । विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत् । हास्यो हासस्थायिभावः श्वेतः प्रथमदेवतः' इति ।

इष्टनाशादनिष्टाप्तौ करुणाख्यो रसो भवेत् । धीरैः कपोतवर्णोऽयं कथितो यमदैवतः' इति । रौद्रः क्रोधस्थायिभावो रक्तो रुद्रादिदैवतः' इति । उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः । महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः' इति । 'भयानको भयस्थायिभावः कालाधिदैवतः । स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः' इति। 'जुगुप्सा स्थायिभावस्तु बीभत्सः कथ्यते रसः । नीलवर्णो महाकालदैवतोऽयमुदाहृतः' इति । अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः । पीतवर्णो वस्तु लोकातिगमालं बनं मतम्' इति । 'शान्तः शमः स्थायिभावः उत्तमप्रकृतिर्मतः । कुन्देन्दुधवलच्छायः श्रीनारायणदैवतः' इति । साहित्यदर्पणोक्तलक्षणानि ज्ञेयानि । तेषु तेषु कालेषु औचित्यं च शृङ्गाररसस्य अन्तःपुरविलाससमये हास्यं च । कौतुकदर्शनादौ करुणः परदारिद्र्येक्षणे । रौद्रवीरबीभत्साः युद्धादौ । अद्भुतं कौतुकावेक्षणे । भयशान्तौ तु गुरुसंनिधौ वेदान्तश्रवणादेव ज्ञेयम् । वस्तूत्प्रेक्षालङ्कारः ॥ २८ ॥

**विद्यारण्यप्रणयरसतो वर्धमानस्य नित्यं**
**सद्धर्मद्रोः सति नरपतेः स्वर्णपूर्णाभिषेके ।**
**भद्रा मुद्राः कनकरुचिरा भेजिरेऽस्यालवालं**
**भूत्यै सेवामिव विदधतो भूपतीनां प्रतापाः ॥**

**विद्यारण्येति** । विद्यारण्यप्रणयरसतः विद्यारण्याचार्यस्य स्नेहरसात् । इतराभ्योऽपि दृश्यत इति तसिः । नित्यं दिने दिने ।

वर्धमानस्य अभिवृद्धिमतः सद्धर्मद्रोः प्रशस्तधर्मरूपवृक्षस्य नरपतेः हरिहरमहाराजस्य । स्वर्णपूर्णाभिषेके सति । कनकरुचिराः कनकेन मनोहराः । भद्राः मङ्गलाः मुद्राः प्रत्ययकारिण्यः । अस्य वृक्षस्य । आलवालं परितो बद्ध उदकसेतुः भूत्यै ऐश्वर्याय । सेवां विदधतः कुर्वन्तः भूपतीनां राज्ञां प्रतापा इव । भेजिरे भान्ति स्म । धर्मस्य स्वत्वेन राज्ञो वृक्षत्वेन सुवर्णमुद्राणाम् आलवालत्वेन रूपणात् एकदेशवृत्तिसावयवरूपकम् । सुवर्णमुद्राणां सेवमानराजान्तरप्रताप-त्वेनोत्प्रेक्षणात् वस्तूत्प्रेक्षा ॥ २९ ॥

अप्राप्यैकं परमपुरुषं सद्गुणानां निधानं
पुण्यात्मानं भुवि बहुनृपानंशतो याश्रितासीत् ।
सैषा जोषादभजत तदा सन्महाराज्यलक्ष्मीः
स्वस्तिश्रीमद्धरिहरमहाराजराजाधिराजम् ॥

अप्राप्येति । पुण्यात्मानं सुकृतस्वरूपं सद्गुणानां शौर्यौदार्या-दीनां गुणानां निधानं निक्षेपस्थानं परमपुरुषम् एकम् अप्राप्य । या सन्महाराज्यलक्ष्मीः । बहुनृपान् अंशतः एकैकदेशात् आश्रिता आसीत् । सैषा लक्ष्मीः स्वस्तिश्रीमद्धरिहरमहाराजराजाधिराजं स्वस्तिश्रीमन्तं हरिहराख्यं राजराजानां राजश्रेष्ठानाम् अधिराजम् अधिकं राजानं जोषात् हर्षात् अभजत असेवत ॥ ३० ॥

हर्षोत्कर्षाद्भुवनगुरुराहन्त्वजानाद्धरेण्यो
विद्यारण्यो निखिलविबुधान्वरय धर्तुं धरेन्द्रान्

आयातास्ते धरणिपतयो धारयामासुरस्मै
स्थाने स्थाने सपदि मुदिताः सार्वभौमाय सर्वे ॥

हर्षेति । भुवनगुरुराट् । वरेण्यः श्रेष्ठः विद्यारण्यः आचार्यः । धरेन्द्रान् भूपालान् । अस्य हरिहरमहाराजस्य । निखिलबिरुदानि-समस्तराजचिह्नानि धर्तुं धारयितुमं । अन्वजानात अनुज्ञातवान् । आयाताः आगताः ते धरणिपतयः । मुदिताः सन्तः । अस्मै सार्वभौमाय चक्रवर्तिने । स्थाने स्थाने स्वस्वमेवासमुचितस्थले । सपदि तत्क्षणे । धारयामासुः धारितवन्तः । अत्युक्त्यलंकारः ॥

कालें तस्मिन्नभिमतमहाकार्यसिद्धेर्वदान्यो
विद्यारण्यो मुनियतिरमुं संभ्रमात्संबभाषे ।
संतोषाब्धौ सदसि नृपते सन्मुहूर्तेऽद्य वर्ते
संप्रेक्ष्य त्वां नरपतिमहाराज्यसिंहासनस्थम् ॥

काल इति । तस्मिन्काले पट्टाभिषेकानन्तरसर्वराजकृतबिरुद धारणसंप्राप्तोत्साहकाले । अमुं महाराजं प्रति । अभिमतमहाकार्य-सिद्धेः अङ्गीकृतमहाकार्यसाधनस्य । वदान्यः उदारः । विद्यारण्य-मुनिपतिः संभ्रमात् रभसात् । सबभाषे सभाषितवान् । हे नृपते अद्य सन्मुहूर्ते नरपतिमहाराज्यसिंहासनस्थं त्वां सदसि सभायां संप्रेक्ष्य समालोक्य । संतोषाब्धौ हर्षसमुद्रे वर्ते वसामि ॥ ३२ ॥

श्रेयो भूयो भवतु भवतः श्रीविरूपाक्षदेव
प्रेम्णा लक्ष्मीं कलय ददतस्तस्य मुद्रां सुभद्राम् ।

भूयाद्भूयस्यनुपममहीमण्डलाखण्डलश्रीः
विद्यातीर्थाभिधमुनिकृपावर्धिकार्योद्यतस्य ॥

श्रेय इति । हे नृपते । श्रीविरूपाक्षदेवप्रेम्णा विरूपाक्षदेवस्य प्रेम्णा प्रीत्या । भवतः तव भूयः बहु । श्रेयः ऐश्वर्यम् । 'पुण्यश्रेयसी सुकृतं वृषः' इत्यमरकोशोक्तरीत्या । श्रेयःशब्दस्य पुण्यवाचकत्वेऽपि तत्साधकत्वादैश्वर्यार्थे प्रायिको लोकलक्षणया व्यवहारः । भवतु लक्ष्मीं संपत्तिं ददतः तस्य विरूपाक्षदेवस्य सुभद्रां सुष्ठु भद्राणि यस्याः सकाशात् तां सुभद्रां प्रत्ययकारिणीं कलय अङ्गीकुरु । विद्यातीर्थाभिधमुनिकृपावर्धिकार्योद्यतस्य विद्यातीर्थाभिधमुनेः कृपां वर्धयते तच्छीलं तस्मिन् काले उद्यतस्य प्रयत्नवतः भवतः अनुपममहीमण्डलाखण्डलश्रीः अनुपमा असदृशी महीमण्डलाखण्डलश्रीः भूदेवेन्द्रसंपत् । भूयसी बह्वी भूयात् । मुद्रां कलयेति प्राज्ञतममहायोग्युपदेशेन तन्मुद्रापरिपालनपर्यन्तमेव महाराज्याधिपत्यमिति सूच्यते । विद्यातीर्थेत्यादिविशेषणेन स्वगुरुविद्यातीर्थमुनिदयावर्धिकार्यकरणेनैव ऐश्वर्याभिवृद्धिरिति स्वाभिप्रायोऽपि सूचितः । मुद्रालङ्कारः ॥३३॥

आचक्षाणं तमिति समितो प्रत्युवाचाथ वाग्मी
स्वामिन् श्रीमच्चरणकमलायत्तमेतत्समस्तम् ।
छात्रोऽहं ते गुरुवरकृपापाङ्गपातस्य पात्रं
कार्येष्वार्य स्मृतिनिभगिरा साधु मां बोधयेति ॥

आचक्षाणमिति । अथ अनन्तरम् । वाग्मी प्रशस्तवाक्पटुः ।

सः हरिहरमहाराजः । समितौ सभायाम् । 'सभा समिति संसदः' इत्यमरः । इति एवंप्रकारेण आचक्षाणं वक्तारम् । तं विद्यारण्याचार्यं प्रति । हे स्वामिन् ईशितः । एतत्समस्तं महाराज्याधिपत्यवैभवम् । श्रीमच्चरणकमलायत्तं श्रीरस्यास्तीति श्रीमत् तच्च तत् चरणकमलं च तस्य आयत्तमधीनम् । 'अधीनो निघ्न आयत्त' इत्यमरः । अस्तीति शेषः । हे गुरुवर गुरुश्रेष्ठ । कृपापाङ्गपातस्य दयाकटाक्षस्य पात्र योग्यः अहं ते तव छात्रः शिष्यः भवामीति शेषः । आर्यस्मृतिनिभगिरा मन्वादिस्मृतिसदृशवाक्येन । कार्येषु कर्तव्येषु । साधु सुष्ठु मां बोधय अवगमय इति उवाच उक्तवान् ॥ ३४ ॥

एवं भूमीरमणवचसा प्रार्थितः सन्यतीन्द्रः
प्रोचे राजन्प्रवितर धनागतेभ्यो द्विजेभ्यः ।
भूदानादि प्रवितनु महादानमप्यग्रहारान
पुर्याः प्राज्ञान् भर जननुतो राजनीत्या जयेति ॥

**एवमिति** । यतीन्द्रः विद्यारण्याचार्यः । एवं भूमीरमणवचस भूमीरमणस्य राज्ञः वचसा वाक्येन । प्रार्थितः याचितः सन् । हे राजन् आगतेभ्यः पट्टाभिषेकोत्सवकाले आगतेभ्यो द्विजेभ्यः । वित्तवस्त्राभरणवाहनादि प्रवितर प्रयच्छ । भूदानादिभूमिगोगजाश्वदानप्रभृतीनि महादानमपि जातावेकवचनम् । प्रवितनु प्रकर्षेण कुरु । महादानशब्देन षोडशमहादानान्युच्यन्ते तथा च सूतसंहितायाम् 'अतः षोडशदानानि यानि गुह्यानि मानव ; तानि ते कथयिष्यामि

यथावदनुपूर्वशः । आद्यं तु सर्वदानानां तुलापुरुषसंज्ञितम् । हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् । कल्पपादपदानं च गोसहस्रं च पञ्चमम् । हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च । हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा । पञ्चलाङ्गलकं तद्वत् धरादानं तथैव च । द्वादशं विश्वचक्रं च ततः कल्पलतात्मकम् । सप्तसागरदानं च रत्नधेनुस्तथैव च । महाभूतिघटस्तद्वत् षोडशः परिकीर्तितः इति । एतेषां पृथग्लक्षणानि दानहेमाद्र्यादिषु द्रष्टव्यानि । अग्रहारान् विप्रगृहीतान् । उक्तं च सिद्धान्तशेखरीये— खेटग्रामाग्रहाराश्च कुब्जं दुर्गं च पत्तनम् । पुरं च राजधानीति कीर्तिता ह्यष्टधा बुधैः । शूद्रैरधिष्ठितं खेटं ग्रामः शूद्रैर्द्विजैरपि । विप्रैरेवाग्रहारः स्यात् कुब्जं सीमान्तवासतः । दुर्गं देशादिरक्षार्थं वनादिजलदुर्गमम् । चतुरङ्गबलोपेतमगम्यं सर्वशत्रुभिः । द्वीपान्तरगतद्रव्यक्रयविक्रयान्वितम् । पत्तनं चेति व्याख्यातं पुरलक्षणमुच्यते । अनेकजातिसंयुक्तं तन्तुवाययुतं परम् । नृपमन्दिरसंयुक्ता चतुरङ्गबलान्विता । हर्म्यैर्देवालयैर्युक्ता राजधानीति चोच्यते । इति तल्लक्षणं ज्ञेयम् । पुर्याः विरचय्य प्राज्ञान् मनीषिणः भर पोषय । जननुतः सन् राजनीत्या कामन्दकचाणक्यादि नीतिशास्त्रोक्त्या राजनीत्या जय सर्वोत्कर्षेण वर्तस्व । इति प्रोच उक्तवान् ॥ ३५ ॥

दानान्यथात्तदनु स तदा हर्षदात्पार्षदाय-
 क्ष्मादेवेभ्यो क्षितिपमकुटीरत्ननीराजिताङ्घ्रिः ।

सर्वैर्भूपैः प्रविलसदहंपूर्विकैरर्पणीयान्
हस्त्यश्वाद्यान् बहुविधकरान् दर्शनेनानुमेने ॥

दानानीति । तदा तस्मिन् काले । क्षितिपमुकुटीरत्ननीराजिताङ्घ्रिः क्षितिपानां राज्ञां याः मकुट्यः किरीटानि 'मण्डनं चाथ मकुटं किरीटं पुंनपुंसकं' इत्यमरः । स्त्रीत्वविवक्षायां ङीप् । तासां रत्नैः नीराजितौ अङ्घ्री यस्य स तथोक्तः सः हरिहरमहाराजः । तदनु ततः पश्चात् पार्षदाग्र्यक्ष्मादेवेभ्यः पर्षदि सभायां साधवः पार्षद्याः । परिषदो ण्य इति तत्र साधुरित्यर्थे ण्यः । ते च ते क्ष्मादेवाः द्विजाश्च तेभ्यः दानानि पूर्वोक्तानि हर्षदः सन् आधत्त कृतवान् । प्रविलसदहंपूर्विकैः प्रविलसन्ती अहंपूर्विका येषां तैः तथोक्तैः पुरस्तात् पुरस्तात् अहमहमर्पयामीत्यौत्सुक्यविशेषो अहंपूर्विका 'अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम्' इत्यमरः । सर्वैः भूपैः अर्पणीयान् समर्पयितव्यान् हस्त्यश्वाद्यान् आद्यशब्देन रत्नपुञ्ज आभरणराशिप्रभृतयो गृह्यन्ते । बहुविधकरान् बहुप्रकारोपहारान् । दर्शनेन अवलोकनेन अनुमेने अङ्गीकृतवान् ॥ २६ ॥

पूर्णोत्साहो नरपतिरयं मन्दिरादिन्दिराढ्यो
वाद्योद्घोषैर्विविधविरुदैर्वन्दिबृन्दैरमन्दैः ।
हस्त्यश्वाद्यैर्बहुविधबलैश्चाधिरुह्येभराजं
वीथीमागाद्विजयनगरे नाकपुर्यामिवेन्द्रः ॥ ३७ ॥

पूर्णोत्साह इति । इन्दिराढ्यः इन्दिरया लक्ष्म्या आढ्यः-

सन्नः । अयं नरपतिः हरिहरमहाराजः । वाद्योद्घोषैः वाद्यानाम् उच्चैर्ध्वनिभिः । विविधविरुदैः बहुप्रकारैरसाधारणराजचिह्नैः । अमन्दैः पटुभिः । वन्दिवृन्दैः स्तुतिपाठकसमूहैः । हस्त्यश्वाद्यैः हस्तिनः अश्वाश्च आद्या येषां तैः । आद्यपदेन पदातिप्रभृतय उच्यन्ते । बहुविधबलैः बहुप्रकारबलैश्च सह पूर्णोत्साहः सन् इभराजं गजेन्द्रम् अधिरुह्य आरुह्य नाकपुर्यां नाकस्य स्वर्गलोकस्य पुर्याम् अमरावत्याम् । इन्द्र इव इन्द्र इव विजयनगरे वीथीं प्रति आगात् आगतवान् । उपमालंकारः ॥ ३७ ॥

तस्मिन्काले हरिहरमहाराजमुद्भ्राजमानं
राजीवाक्ष्यो नयननलिनैश्चारु नीराजयन्त्यः ।
पौनःपुन्याल्ललितमिव नीराजयामासुरेनं
प्रासादाग्रे करकलितया रत्ननीराजनाल्या ॥

तस्मिन्निति । तस्मिन्काले वीथीनिर्गमनानन्तरकाले प्रासादाग्रे राजीवाक्ष्यो राजीवे पद्मे इव अक्षिणी नयने यासां ताः तथोक्ता योषितः । 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरः । बहुव्रीहौ सक्थ्यक्ष्णोरिति असन्तात् बहुव्रीहिः षच् । उद्भ्राजमानं उत्कर्षेण दीप्यमानं एनं हरिहरमहाराजम् । नयननलिनैः नेत्रकमलैः चारु मनोहरं यथा स्यात् तथा । नीराजयन्त्य इव सौन्दर्यशालित्वात् अथितः पश्यन्त्य इव । करकलितया हस्तधृतया रत्ननीराजनाल्या रत्नारात्रिकपंक्त्या । पौनः पुन्यात् पुनः पुन कर्म पौनः पुन्यम् । ब्राह्मणादित्वात् ष्यञ् । अव्ययानां भमात्रे इति टि-

लोपः । ललितं विलासयितृ यथा स्यात् तथा विलासार्थकस्य ललधातोः जिह्वोन्मथने लडि रिति मित्वात् अन्तर्गतणिचा ललने-त्यादाविव प्रयोजकव्यापारो भासते । नीराजयामासुः अभिद्योतया-मासुः । निपूर्वकात् राजृदीप्तावित्यस्मात् णिजन्तादामि अनुप्रयुक्ता-दस्तेर्लिट् । नीराजयन्त्य इत्यत्र दर्शनस्य नीराजनत्वसंभावनात् वस्तूत्प्रेक्षा ॥ ३८ ॥

**हर्म्योपाग्रे कृतवसतिभिर्लालसा निर्निमेषं**
**पश्यन्तीभिर्द्विजयुवतिभिर्मङ्गलाचारलाजाः ।**
**कीर्णाः पूर्णाभ्युदयविलसत्सार्वभौमस्य शीर्षे**
**हृष्ट्या वृष्टाः सुमनस इव स्वर्वधूभिर्विरेजुः ॥ ३९ ॥**

**हर्म्येति** । हर्म्योपाग्रे हर्म्यस्य धनिकभवनस्य 'हर्म्यादि धनिनां वासः' इत्यमरः । तस्य उपाग्रे समीपाग्रप्रदेशे । कृतवसतिभिः कृताः वसतयो गृहाः याभिः ताः तथोक्ताभिः । 'वशिवस्यर्त्तिभ्य-श्चित्' इति अतिप्रत्ययः । वसतिर्गृहयामिन्यो स्त्रिया' मित्यमरः । लालसानिर्निमेषं लालसया अत्यर्थाकाङ्क्षया निर्निमेषं निर्गता निमेषा यस्मिन्कर्मणि तद्यथा स्यात्तथा । पश्यन्तीभिः अवलोकमा-नाभिः द्विजयुवतिभिः विप्रतरुणीभिः । पूर्णाभ्युदयविलसत्सार्वभौ-मस्य पूर्णः संपूर्णः अभ्युदयः अभिमुखसंपदुदयः तेन विलसतः सार्वभौमस्य हरिहरमहाराजस्य । शीर्षे शिरसि । कीर्णाः उत्क्षिप्ताः मङ्गलाचारलाजाः मङ्गलाचारार्थं लाजाः । 'लाजाः पुं भूम्नि चाक्ष-ताः' इत्यमरः । दाराक्षतलाजासूनां बहुत्वं चेति लिङ्गानुशासन-

सूत्रेण नित्यबहुवचनान्तः स्वर्वधूभिः त्रिदिवाङ्गनाभिः हृष्टया हर्षेण वृष्टाः सुमनस इव पुष्पाणीव 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः विरेजुः दिदीपिरे । द्विजयुवतिकृताचारलाजात्क्षेपणस्य स्वर्वधूकृत-पुष्पवृष्टित्वेनोत्प्रेक्षणाद्वस्तूत्प्रेक्षा ॥ ३९ ॥

**पूर्णैश्वर्योदयजनघने लब्धवर्णप्रवर्ण्ये**
**सर्वोर्वीन्द्रैर्विजयनगरे सर्वतः संविहृत्य ।**
**स्तुत्यः पौरैर्नरपतिरयं धर्मसूनूपमानः**
**सौधं प्रागात्सुविनयपरैः सादरैर्मोदमानः ॥**

पूर्णेति । पूर्णैश्वर्योदयजनघने पूर्णः संपूर्णः ऐश्वर्यस्य उदयः येषां तैस्तथोक्तैः । जनैः घने निबिडे । लब्धवर्णप्रवर्ण्ये लब्धवर्णैः विचक्षणैः 'लब्धवर्णो विचक्षणः' इत्यमरः । प्रवर्ण्ये प्रकर्षेण वर्णनीये । विजयनगरे । सर्वोर्वीन्द्रैः समस्तभूमिपतिभिः । सर्वतः समन्तात् । संविहृत्य सम्यक् विहारं कृत्वा । पौरैः पुरे भवाः पौराः तैः स्तुत्यः प्रशंसनीयः । धर्मसूनूपमानः धर्मसूनुर्युधिष्ठिरः उपमानं यस्य स तथोक्तः अयं नरपतिः हरिहर-महाराजः । सुविनयपरैः सुष्ठुविनयतत्परैः सोदरैः सहजैः उक्तराजाद्यैः मोदमानः संहृष्यन् सन् सौधं राजसदनम् । 'सौधोऽस्त्री-राजसदनम्' इत्यमरः । प्रागात् प्रकर्षेण अगमत् ॥ ४० ॥

**आस्थानस्थो नरपतिरसौ कारयन्मान्त्रिधुर्या-**
**दायातानां सकलधरणीपालकानां यथार्हम् ।**

संमानान्द्राक् समुचितविदाकर्ण्य विज्ञापनानि
प्रीत्या सान्त्वैर्निजनिजपुरीर्यातुमेनान्यदिक्षत् ॥

आस्थानेति । आस्थानस्थः आस्थाने सभायां तिष्ठतीत्यास्थानस्थः । 'सुपिस्थ' इति कप्रत्ययः । समुचितवित् समुचितानि युक्तानि वेत्ति इति समुचितवित् । असौ नरपतिः हरिहरमहाराजः आयातानाम् आगतानाम् । धरणीपालकानां भूपतीनाम् । यथार्हं यथायोग्यम् । संमानान् सत्कारान् । मन्त्रिधुर्यात् अमात्यश्रेष्ठात् । कारयन् सन् । विज्ञापनानि विज्ञप्तिवाक्यानि । प्रीत्या । आकर्ण्य श्रुत्वा । निजनिजपुरीः स्वस्वनगरीः । यातुं गन्तुम् । सान्त्वैः सामवाक्यैः । एतान् आगतभूपालान् । न्यदिक्षत् अनुज्ञातवान् ॥

संम्राण्णम्रो हरिहरमहाराजराजो गुरुश्री-
विद्यारण्यं नृपगणनुतोऽनल्पसंकल्पसिद्धम्
ध्यायं ध्यायं परशिवधियानम्यसाष्टाङ्गरम्यं
विज्ञाप्य स्वं विरुदमखिलं प्रार्पयामास तस्मै ॥

संम्राडिति । नृपगणनुतः नृपाणां राज्ञां गणेन समूहेन नुतः स्तुतः । संम्राट् येनेष्टं राजसूयेनेत्यादिलक्षणलक्षितः हरिहरमहाराजः हरिहराख्यो महाराजानां राजा 'राजाहः सखिभ्यः टच्' इति टच् । अनल्पसंकल्पसिद्धम् अनल्पाः बहवः संकल्पाः मानसनिश्चयाः सिद्धाः पर्यवसिताः यस्य स तथोक्तः तम् । गुरुश्रीविद्यारण्यं गुरुम् हितोपदेशकं श्रीयुक्तं विद्यारण्याचार्यम् । साष्टाङ्गर-

म्यं यथा भवति तथा । आनम्य नमस्कृत्य परशिवधिया परशिवः अयमेवेति धिया ध्यायं ध्यायं ध्यात्वा ध्यात्वा एकतानतया प्रतीत्य विज्ञाप्य विज्ञापनां कृत्वा । नम्रः प्रह्वः सन् । अखिलम् अनूनम् । स्वं स्वकीयम् । बिरुदं महाराजचिह्नम् । यद्यपि गद्यपद्यमयी राजस्तुतिर्बिरुदमुच्यत इति साहित्यदर्पणे बिरुदशब्दस्य राजस्तुतिवाचकत्वमुक्तम्, तथापि तत्साधनत्वात् छत्रचामरादितच्चिह्नेष्वपि बिरुदपदव्यवहार इति बोध्यम् । तस्मै विद्यारण्याचार्याय । प्रार्पयामास प्रकर्षेण समर्पितवान् ॥ ४२ ॥

**यत्नं चक्रे स निखिलतपःसिद्धिमान्स्वर्णवृष्ट्यै**
**नित्यैश्वर्या विजयनगरे सन्तु लोका इहेति ।**
**आसीत्पूर्णा दिशि दिशि ततस्तत्र कल्याणवृष्टिः**
**कल्याणाख्यामभृत च पुरी भूरिकल्याणभोगा ॥**

**यत्नमिति** । निखिलतपःसिद्धिमान् निखिलानां तपसां सिद्धयो अस्य सन्तीति निखिलतपःसिद्धिमान् । स विद्यारण्याचार्यः इह विजयनगरे । लोकाः जनाः । नित्यैश्वर्याः नित्यं स्थिरम् ऐश्वर्यम् ईशितृत्वम् संपदिति पर्यवसितोऽर्थः येषां ते तथोक्ताः सन्तु भवन्तु । इति स्वर्णवृष्ट्यै कनकवर्षाय । यत्नं प्रयत्नम् गुटिकासिद्ध्यादिकं चक्रे कृतवान् । ततः तस्मात्कारणात् । तत्र विजयनगरे । दिशिदिशि कल्याणवृष्टिः सुवर्णवृष्टिः । 'कल्याणमर्जुनं भूरि गैरिकं वसुचन्द्रकम्' इति स्वामी । पूर्णा अन्यूना आसीत् अभूत् । किं च भूरिकल्याणभोगा भूरि बहु । 'कल्याणं मङ्गलं शुभम्' इत्यमरः ।

भोगः सुखं च यस्यां सा तथोक्ता — 'भोगः सुखेस्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। पुरी विजयनगरी कल्याणाख्यां कल्याणेत्यभिधाम् । अभृत धृतवती । 'डुभृञ् धारणपोषणयोः' इत्यस्मात् लुङ् । ह्रस्वादङ्गादिति सिचो लोपः ॥ ४३ ॥

**अस्मद्राजं व्यधित महितश्रीविरूपाक्षमित्रं**
**विद्यारण्यो मुनिपतिरयं सिद्धिमान्भूय एनम् ।**
**श्रीदं कर्तुं धनपतिगृहादाचकर्षन्निधिं किं**
**न्वित्याख्यान्तो वसु जगृहिरे राजशिष्टया जनौघाः ॥**

**अस्मद्राजमिति** । मुनिपतिः अयं विद्यारण्यः, अस्मद्राजम् अस्माकं राजानं हरिहरमहाराजम् । महितश्रीविरूपाक्षमित्रं महितस्य पूजितस्य श्रीयुक्तस्य विरूपाक्षस्य मित्रं प्रेमविशेषास्पदम् । व्यधित कृतवान्। विपूर्वाद्धातोर्लुङ् । भूयः पुनः सिद्धिमान् सन् एनं राजानम् । श्रीदं श्रियं संपदं ददातीति श्रीदः एकपदोपात्तत्वेन साध्यवसानया लक्षणया कुबेरोऽपि प्रतीयते तं कर्तुं धनपतिगृहात् कुबेरभवनात् निधिम् आचकर्षत् किंनु आकर्षितवान् किम् । आङ्पूर्वात्कृषतेः णिजन्ताल्लुङ् । इति एवंप्रकारेण आख्यान्तः कथयन्तः जनौघाः जनसमूहाः । राजशिष्टया राज्ञः महाराजस्य शिष्टया शासनेन वसु परितः पतितं धनं जगृहिरे गृहीतवन्तः । ग्रह उपादान इत्यस्माल्लिट् । वर्षितसुवर्णस्य आकर्षितनिधित्वेनोत्प्रेक्षणात् वस्तूत्प्रेक्षा । श्रीदं कर्तुमित्यत्र कारणालंकारश्च ॥ ४४ ॥

सौवासिन्यं हरिहरमहाराजराजेन लब्धं
मान्यं लोकैरिति निजतनौ भद्रहारिद्रलेपम् ।
कुर्वाणेयं विजयनगरी पीतवर्णा विभाती-
त्युक्तं युक्तं कृतिभिरवनौ किं न साध्यं महद्भिः ॥

सौवासिन्यमिति । हरिहरमहाराजराजेन । सह लब्धं प्राप्तम् । सौवासिन्यं सुवासिन्याः भावः सौवासिन्यम् । भावे ष्यञ् । लोकैः जनैः मान्यं पूज्यम् इति आलोच्येति शेषः । निजतनौ स्ववपुषि भद्रहारिद्रलेपं भद्रं मङ्गलं हरिद्रायाः अयं हारिद्रः तस्येदमित्यण् तस्य लेपं कुर्वाणा इयं विजयनगरी पीतवर्णा विभातीति कृतिभिः विद्वद्भिः उक्तं भाषितं अवनौ भूमौ युक्तम् उचितं महद्भिः न साध्यं किम् । अपि तु सर्वं साध्यमेवेति भावः ॥ ४५ ॥

वासस्थानं तदनु घटयामास पुर्यां सपर्यां
काले काले समभिलषितां शृङ्गिणे संप्रहृष्टः ।
विद्यारण्यो धरणिपतये बोधयित्वा भविष्य-
त्कार्यं सर्वं निरगमदथो तीर्थयात्रां विधातुम् ॥

वासस्थानमिति । संप्रहृष्टः चिरकालोचितसकलकार्यनिर्वाहात् संतुष्टः विद्यारण्यः । तदनु स्वर्णवृष्टेः पश्चात् । पुर्यां विजयनगर्याम् । वासस्थाने निवासस्थले । काले काले समभिलषितां वाञ्छिताम् । सपर्यां पूजाम् । शृङ्गिणे शृङ्गिभट्टाय । घटयामास कारितवान् । ण्यन्तस्यामन्तस्य घटचेष्टायामित्यस्य अनुप्रयोगादस्ते-

किट्। अथो अनन्तरम्। धरणिपतये हरिहरमहाराजाय। सर्वं समस्तं भविष्यत्कार्यं बोधयित्वा तीर्थयात्रां विधातुं कर्तुं निरगमत् निर्गतवान्॥ ४६॥

मार्गे गच्छन्स विजयपुरे प्रेक्षिताळोकमारीं
मारीं तस्या द्रुतमरचयत्सर्वदिग्बन्धमस्त्रैः।
स्रोतोभेदैर्दशशतविधैः सागरं संमिळन्त्याः
भागीरथ्या मुनिशतविधान्याशु तान्यत्ययासीत्॥

मार्ग इति। सः विद्यारण्याचार्यः। मार्गे गच्छन् सन्। विजयपुरे पूर्वोक्तविजयनगरादन्यस्मिन् विजयपुरे लोकमारीं लोकान् जनान् मारयतीति लोकमारी ताम्। मारीं मारीनाम्नीम् दुर्गां प्रेक्षिता अवलोकयिता सन्। अस्त्रैः अघोराद्यस्त्रमन्त्रविशेषैः। तस्याः मार्याः। सर्वदिग्बन्धं सर्वदिग्विहारनिरोधम्। अरचयत् रचितवान् दशशतविधैः सहस्रप्रकारैः। स्रोतोभेदैः जलनिर्गमपरिभेदैः सागरं समुद्रं मिलन्त्याः संगच्छमानायाः। भागीरथ्याः गङ्गायाः मुनिशतविधानि सप्तशतप्रकाराणि तानि स्रोतांसि आशु शीघ्रम्। अत्ययासीत्। अतियातवान्॥ ४७॥

मागच्छार्य त्वमथ सहसेत्यद्भुतामभ्रवाणीं
अग्रे श्रुत्वा गुरुनिगदितं संनिवृत्तस्ततो वै।
किंचित्कालं कृतबहुतपाः प्रेक्ष्य केदारनाथं
गङ्गातीरे मुनिजनघने काशिकायामवात्सीत्॥ ४८॥

मागच्छेति । अये विद्यारण्याचार्य । त्वम् अग्रे सतत-स्रोतसः पुरस्तात् सहसा बलात्कारेण । मा गच्छ मा याहि । इत्थ-म्भूताम् आश्चर्यकारिणीम् अभ्रवाणीम् आकाशवाचम् । श्रुत्वा आक-र्ण्य । गुरुनिगदितं गुरुणा विद्यातीर्थाचार्येण निगदितम् उक्तं यत्रा-शरीरवाणीमित्यादि स्मृत्वा ततः तस्मात्प्रदेशात् संनिवृत्तः सन् के-दारनाथं केदारेश्वरम् । संप्रेक्ष्य आलोक्य । किंचित्कालं कतिपयका-लं 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । कृतबहुतपाः कृतानि बहूनि तपांसि येन स तथोक्तः । मुनिजनघने मुनिजनैः घने निबि-डितायां काशिकायां वाराणस्याम् अवात्सीत् वासं कृतवान् ॥

मूकं दिल्लीश्वरतनुभुवं तेन संप्रार्थ्यमानः
कृत्वा वाग्मिप्रवरमथ तं प्राप्य भूमिं च तस्मात् ।
प्राक्क्लृप्तानां त्रिदशतटिनीतीरगानां मठाना-
मासन्नं श्रीमठयुगलमाधाप्य तत्रैव तस्थौ ॥ ४९ ॥

मूकमिति । एषः विद्यारण्याचार्यः । मूकम् अवाचम् दिल्लीश्वर-तनुभुवं दिल्लीनाम्न्या राजधान्याः ईश्वरस्य अधिपतेः अश्वपतिमहारा-जस्य तनुभवं पुत्रं तेन अश्वपतिना संप्रार्थ्यमानः सन् याच्यमानः सन् । मूकम् अश्वपतिपुत्रम् वाग्मिप्रवरं कृत्वा तस्मात् अश्वपतेः स-काशात् भूमिं प्राप्य विभवातिशयानुगुणबहुतरपारितोषिकदानाय प्रार्थितोऽप्ययं वैराग्यात् सर्वं निषिद्धय स्वोपयोगिनीं गङ्गातीरवासा-नुगुणां मठद्वयनिर्माणयोग्यां भूमिमेवाङ्गीकृतवानिति ज्ञेयम् । अथ

अनन्तरं प्राक् पूर्वम् । शंकराचार्यकर्तृकदिग्विजयकाले कल्पितानां सिद्धानां त्रिदशतटिनीतीरगानां त्रिदशतटिन्याः देवनद्याः गङ्गायाः तीरं गच्छन्ति प्राप्नुवन्तीति तीरगाः तेषां मठानाम् आसन्नं समीपम् श्रीमठयुगलं श्रीमठयुग्मम् आधाप्य कारयित्वा तत्र तस्मिन् काशीक्षेत्रे गङ्गातीरे मठे तस्थौ स्थितवान् ॥ ४९ ॥

**स्मृत्वा वाणीं गुरुनिगदितां सत्वरं शृङ्गपुर्यां**
**मारप्पाख्यं प्रणयिसहजं प्रेष्य जामातृयुक्तम् ।**
**वृत्तिक्षोणीं हरिहरनृपो हर्षकृत्पार्षदानां**
**विद्यातीर्थप्रवरमुनये प्रार्पयमास भक्त्या ॥ ५० ॥**

विद्यारण्यकृतकाशीक्षेत्रवासपर्यन्तचरित्राण्यभिधाय पुनः हरिहरमहाराजकृतपरमगुरुविद्यातीर्थमुनिराजसत्कारादिवृत्तानि वक्तुमुपक्रमते– **स्मृत्वेति** । हरिहरनृपः गुरुनिगदितां गुरुणा विद्यारण्याचार्येण निगदितां विद्यातीर्थाभिधमुनिकृपावर्धिकार्योद्यतस्येति पट्टाभिषेकान्तरकाले तात्पर्येण कथितां वाणीं वाचं स्मृत्वा जामातृयुक्तं जामात्रा बल्लपडनायकाख्येन युक्तं मारप्पाख्यं मारप्प इत्याख्या यस्य सः तथोक्तस्तं प्रणयिसहजं प्रणयः अस्य अस्तीति प्रणयी स्नेहवान् स चासौ सहजश्च तं सत्वरं त्वरया सहितं यथा स्यात् तथा शृङ्गपुर्यां प्रेषण कृत्वा । पार्षदानां पर्षदि भवाः पार्षदाः सभ्याः । दृढभेसादिभिरिति पूर्वेरपि बाहुलकादौणादिकः अदिप्रत्ययः । तथा च महाभाष्यं पार्षदकृतिरेषा तत्र भवतां सर्ववेदपार्षदं हीदं शास्त्रमिति च ।

तेषां हर्षकृत् सन् वृत्तिक्षोणीं शिष्यजनकुटुम्बपोषणनिर्वाहोपयोगिभूमिम् । विद्यातीर्थप्रवरमुनये विद्यातीर्थ एव प्रवरमुनिः तस्मै भक्त्या प्रार्पयामास प्रकर्षेण अर्पणं कारितवान् । पार्षदानां हर्षकृदिति साभिप्रायविशेषणात् परिकरालंकारः ॥ ५० ॥

**बुक्कक्ष्मेन्द्रः शुचमधिगतो वैद्यदुःसाधरोगा-**
**त्स्वप्नं पुण्यैरलभत चर क्षिप्रमारोग्यमाप्तुम् ।**
**विद्यातीर्थप्रशमिसविधं भक्तिमानित्यमात्यै-**
**रालोच्यामुं निरणयदथो शृङ्गपुर्यां प्रयातुम् ॥ ५१ ॥**

बुक्कक्ष्मेन्द्र इति । अथो हरिहरमहाराजानन्तरं बुक्कक्ष्मेन्द्रः बुक्कमहाराजः । वैद्यदुःसाधरोगात् वैद्यानां चिकित्सकानां दुःसाधात् दुःखेन साधयितुं अशक्यात् रोगात् शुचं शोकं अधिगतः प्राप्तवान् सन् क्षिप्रं शीघ्रम् । आरोग्यम् अरोगस्य भावः आरोग्यं आप्तुम् प्राप्तुं विद्यातीर्थप्रशमिसविधं विद्यातीर्थस्य प्रशमिनः मुनेः सविधं निकटम् । भक्तिमान् सन् चर गच्छ इति पुण्यैः सुकृतैः स्वप्नम् । अलभत प्राप्तवान् । लुलभप् प्राप्ताविसस्माल्लङ् । अमात्यैः सह अमुं स्वप्नं आलोच्य शृङ्गपुर्यां प्रयातुं गन्तुं निरणयत् निर्णीतवान् । निपूर्वकान्नयतेर्लङ् ॥ ५१ ॥

**निर्गत्य श्रीविजयनगरात्सर्वसेनासमेतो**
**भूमीपालैः पथि पथि करैः सेवितश्चोपचारैः ।**

**यातः पुर्याः सविधमथ स स्थापयित्वा चमूं स्वां**
**दूरे योगिप्रवरनिकटं बुक्कराजः समागात् ॥ ५२ ॥**

निर्गत्येति। अथ अनन्तरम्। सर्वसेनासमेतः सर्वसेनया समस्तसैन्येन समेतः संगतः सः बुक्कराजः। श्रीविजयनगरात् निर्गत्य, पथि पथि मार्गे मार्गे। भूमिपालैः करैः उपदाभिः। उपचारैः तत्तत्कालोचितसत्कारविशेषैश्च सेवितः सन्। पुर्याः शृङ्गपुर्याः सविधं समीपम्। यातः प्राप्तः सन्। स्वां चमूं सेनाम्। दूरे स्थापयित्वा, योगिप्रवरनिकटं योगिप्रवरस्य विद्यातीर्थाचार्यस्य, निकटं समीपं समागात् समागतवान्॥ ५२॥

**वैराग्येणाप्रसितहृदयं राजलोकावलोके**
**ध्यानारूढं परिजनगिरा प्रार्थयन्तं विलोक्य।**
**सार्थं जन्माकलयत ततोऽनामयोऽभूदयत्ना-**
**त्सेवायै मुदितहृदयं वृत्तिभूमीरदाच्च ॥ ५३ ॥**

वैराग्येणेति। अयं बुक्कराजः। वैराग्येण विरक्त्या। राजलोकावलोके राजजनदर्शने अप्रसितहृदयम्। ध्यानारूढं ध्याने परशिवध्याने आरूढम् अधिरूढम्। तं विद्यातीर्थाचार्यम्। परिजनगिरा शुश्रूषजनवचसा प्रार्थयन् प्रार्थनं कारयन्। विलोक्य तस्य जन्म स्वकीयं जनुः। सार्थं सफलम् अकलयत विदितवान्। ततस्तद्दर्शनात्। अयत्नात् यत्नाभावात्। अनामयः न विद्यते आमयो रोगो यस्य स तथोक्तः। 'रोगव्याधिगदामयाः' इत्यमरः।

अभूत्। मुदितहृदयः संतुष्टहृदयः सन्। तत्सेवायै तस्य विद्यातीर्थाचार्यस्य सेवायै। वृत्तिभूमीः वर्तनभुवः। अदाच्च दत्तवानपि ॥

ख्यातो दाता सकलसुजनस्तोत्रपात्रं चरित्रै-
र्मौनीन्द्रानुग्रहमधिगतो लब्धसंपत्तिरेषः ।
प्राप्यानुज्ञामथ मुनिपतेर्भारतीकृष्णतीर्था-
त्संप्राप्ताशीर्विजयनगरीं पूर्णकामः प्रतस्थे ॥ ५४ ॥

ख्यात इति। ख्यातः प्रसिद्धः। दाता दानशीलः। चरित्रैः गुरुसेवादिसद्धर्मवृत्तैः। सकलसुजनस्तोत्रपात्रं सकलानां समस्तानां सुजनानां स्तोत्रस्य पात्रं योग्यः। 'योग्यभाजनयोः पात्रम्' इत्यमरः। मौनीन्द्रानुग्रहं विद्यातीर्थाचार्यस्य प्रसादम् अधिगतः प्राप्तवान्। अत एव लब्धसंपत्तिः येन सः तथोक्तः एषः बुक्कमहाराजः। अनुज्ञाम् एतदनुज्ञां प्राप्य। अथ अनन्तरम्। मुनिपतेः भारतीकृष्णतीर्थात्। तच्छिष्यादेतन्नामकाचार्यात् संप्राप्ताशीः लब्धाशीर्वादः पूर्णकामः रोगविमोकात् संपूर्णाभिलाषः सन्। विजयनगरीं प्रति प्रतस्थे ॥ ५४ ॥

ब्रह्मोपेन्द्राद्यनुसृतमहेशानलिङ्गात्मतैषी
शिष्ये न्यस्याखिलनिजतपो राज्यभारं यतीन्द्रः ।
योगाभ्यासात्सकलविदयं लम्बिकायोगचर्या-
रीतिं सिंहाद्रिवसतिरुपादर्शयत्पार्षदेभ्यः ॥ ५५ ॥

ब्रह्मेति। ब्रह्मोपेन्द्राद्यनुसृतमहेशानलिंगात्मतैषी ब्रह्मोपेन्द्रादिभिः

विरिञ्चिविष्ण्वादिभि । आदिशब्देन लक्ष्मीनृसिंहदशावतारमूर्तयः उच्यन्ते । ब्रह्मोपेन्द्रादिशब्दः तन्मूर्तिलक्षक इति ज्ञेयं तैः अनुसृतम् अनुगतं सर्वतः संगतमिति यावत् । तथाभूतं यन्महेशानस्य महांश्चासौ ईशानश्च महेशानः तस्य लिङ्गं यत् तदात्मताम् इच्छतीति तच्छीलः । योगाभ्यासात् प्राणायामादिभिरङ्गैरुपेतस्य योगस्य चित्तवृत्तिनिरोधस्य अभ्यासात् परिशीलनात् सकलवित् सर्वज्ञः । अयं यतीन्द्रः विद्यातीर्थाचार्यः । शिष्ये भारतीकृष्णतीर्थाचार्ये । अखिलनिजतपोराज्यभारं अखिलं समस्तं निजं स्वकीयं तपःसंबन्धि राज्यसंबन्धश्च परिपाल्यपरिपालकभाव इति बोध्यम् । तस्य भारं न्यस्य स्थापयित्वा । सिंहाद्रिः सिंहाद्रिनामकगिरिविशेषः तस्मिन् वसतिः विलासो यस्य स तथोक्तः सन् । पार्षदेभ्यः सभ्येभ्यः लम्बिकायोगचर्यारीतिं लम्बिकायोगस्य लम्बिकाख्ययोगविशेषस्य । 'वदामि तल्लक्षणं तु लम्बिकस्य तु तत्स्थानं । तव शोभने ' इत्यादि वज्रकवाटादियोगशास्त्रमूलग्रन्थेषु द्रष्टव्यम् । विस्तरभयान्न प्रपञ्च्यते । चर्याया आचरणस्य रीतिम् अदर्शयत् दर्शितवान् ॥ ५५ ॥

**प्राग्वाहिन्याः प्रविमलतटे तुङ्गभद्रातटिन्याः**
**गम्भीरोद्यन्महिमविलसच्छारदाम्बासमीपे ।**
**शुद्धाद्वैतोज्ज्वलमतिरयं लम्बिकायोगनिष्ठो**
**योगिश्रेष्ठो न्यधित हृदयं शंभुलिङ्गात्मभावे ॥ ५६ ॥**

प्राग्वाहिन्या इति । प्राग्वाहिन्याः पूर्ववाहिन्याः तुङ्गभद्रातटिन्याः तुङ्गभद्रानद्याः । प्रविमलतटे प्रकर्षेण निर्मले तीरे । गम्भीरोद्यन्म-

हिमविलसच्छारदाम्बासमीपे गम्भीरायाः उद्यन्त्याः महिम्ना महत्त्वेन विलसन्त्याः विलासशालिन्याः । शारदाम्बायाः निकटे समीपे । शुद्धाद्वैतोज्ज्वलमतिः शुद्धाद्वैतेन विशुद्धाभेदेन उज्ज्वला प्रकाशमाना मतिः बुद्धिः यस्य स तथोक्तः । लम्बिकायोगनिष्ठः प्रागुक्ते लम्बिकायोगे । निष्ठा नियतासक्तिः यस्य स तथोक्तः । योगिश्रेष्ठः विद्यातीर्थाचार्यः शंभुलिङ्गात्मभावे शिवलिङ्गस्वरूपतायां हृदयं मनः । न्यधित निहितवान् निपूर्वकाद्धधातेर्लुङ् ॥ ५६ ॥

**यातेष्वेवं कतिपयदिनेष्वत्र विघ्नात्समाधे-**
**श्छात्रायासौ त्वरितमदित स्वप्नमासन्नगाय ।**
**शैवं लिङ्गं प्रणतवरदं स्थापयन्स्वोर्ध्वभागे**
**कुर्वन्नर्चां यतिवर जनान्प्रापयेष्टं भुवीति ॥ ५७ ॥**

यातेष्विति । एवं कतिपयदिनेषु यातेषु गतेषु सत्सु असौ विद्यातीर्थाचार्यः । समाधेः एकतानप्रत्ययविशेषस्य । विघ्नात् संप्राप्तान्तरायात् । आसन्नगाय समीपगताय छात्राय शिष्याय त्वरितं शीघ्रम् । हे यतिवर स्वोर्ध्वभागे स्वस्योपरिभागे प्रणतवरदं प्रणतानां प्रणन्तॄणां वरदं अभीष्टदं शैवं शिवसंबन्धि लिङ्गम् । स्थापयन् प्रतिष्ठां कारयन् । भुवि भूलोके । जनान् लोकान् । इष्टं अभीष्टार्थं प्रापय लम्भय इति स्वप्नम् अदित दत्तवान् ॥ ५७ ॥

**बुक्कक्षोणीरमणसविधं वृत्तमेतत्सुशिष्यः**
**प्रैषीदुक्त्वा कमपि सुपतिं साकपाशास्तिपत्त्रया ।**

अभ्युद्गच्छन्कृतबहुमतिर्मस्तके धारयंस्तां
मेने चित्रं स हृदि निखिलं मन्त्रिभिर्वाचयित्वा ॥

बुक्कक्षोणीति । स शिष्यः भारतीकृष्णतीर्थाचार्यः कमपि कञ्चिदपि । सुमतिं सुबुद्धिमन्तम् । एतद्वृत्तं एतत् चरितम् । लम्बिकायोगविघ्नलिङ्गप्रतिष्ठापनस्वप्नादि उक्त्वा अभिधाय । बुक्कक्षोणीरमणसविधं बुक्कराजनिकटं प्रति । आशास्तिपत्र्या आशीर्वादपत्रिकया । साकं सह प्रैषीत् प्रेषितवान् । ईषगताविति दिवादेर्लुङ् । अस्यैव प्रपूर्वकत्वे प्रेषणार्थकत्वं च । उक्तमाख्यातचन्द्रिकायां 'स्युः प्रेषणे प्रेष इति प्रेष्यति प्रहिणोति च' इति। अभ्युद्गच्छन् अभिगमनं कुर्वन् । कृतबहुमतिः कृता बहुमतिः बहुमानो येन सः तथोक्तः सः बुक्कराजः । ताम् आशीर्वादपत्रिकाम् । मस्तके शिरसि धारयन् सन् । मन्त्रिभिः वाचयित्वा । हृदि हृदये । निखिलं सर्वमिदं चित्रम् आश्चर्यकरि । मेने ज्ञातवान् । मनज्ञान इत्यस्माल्लिट् ॥ ५८ ॥

द्रव्यं देवालयविरचने माधवामात्यहस्ता-
त्प्रैषीत्तोषी स च नरपतिः प्रौढविज्ञप्तिपत्र्या ।
आलोक्यैनामपि च सचिवं भारतीकृष्णतीर्थः
श्रीमान्योगी विबुधविनुतः प्राप हर्षप्रकर्षम् ॥ ५९ ॥

द्रव्यमिति । स नरपतिः बुक्कमहाराजः । तोषी संतोषवान् सन् । देवालयविरचने प्रागुक्तस्य लिङ्गात्मकदेवस्य विद्याशंकरस्य आलय-

विरचने मन्दिरनिर्माणविषये । माधवामात्यहस्तात् । द्रव्यं धनं प्रौढविज्ञप्तिपत्र्या प्रौढायाः प्रगल्भार्थवत्याः विज्ञप्तेः विज्ञापनायाः पत्र्या पत्रिकया । सहार्थे तृतीया । प्रैषीत् प्रेषितवान् । विबुधविनुतः विद्वद्भिः स्तुतः । श्रीमान् संपत्तिमान् । भारतीकृष्णतीर्थः योगी । एनां विज्ञापनापत्रिकां सचिवं च माधवामात्यमपि आलोक्य दृष्ट्वा हर्षप्रकर्षं संतोषाधिक्यम् प्राप प्राप्तवान् ॥ ५९ ॥

**विद्याशंकरसद्गुरोर्नतजनाभीष्टप्रदद्योतरो-**
**र्लोकाश्चर्यकृदालयस्य यतिराट् शैवादितन्त्रार्थवित् ।**
**आकार्याखिलशिल्पिनः सुचतुरान्सर्वत्र देशे स्थिता-**
**ञ्ज्ञानानो वरवास्तुशास्त्रगदितं प्रास्तौष्ट निर्मापणम् ॥**

विद्याशंकरेति । लोकाश्चर्यकृत् लोकानां जनानाम् आश्चर्याणि करोतीति लोकाश्चर्यकृत् । शैवादितन्त्रार्थवित् शैवादितन्त्राणां चतुःषष्टितन्त्रमध्यगतकर्षणादिप्रतिष्ठान्तविधिप्रतिपादकवातुलवातुलोत्तरकामिकादितन्त्राणाम् अर्थान् वेत्तीति शैवादितन्त्रार्थवित् । वरवास्तुशास्त्रगदितं वरे वास्तुशास्त्रे गदितम् उक्तम् । जानानः ज्ञाताः यतिराट् यतिश्रेष्ठः भारतीकृष्णतीर्थः । सर्वत्र सर्वस्मिन् देशे । स्थितान् सचतुरान् चातुर्यवतः अखिलशिल्पिनः । आकार्य आकारणं कारयित्वा करोतेर्णिजन्ताण्णिच् । नतजनाभीष्टप्रदद्योतरोः नतजनानाम् अभीष्टं प्रददातीति नतजनाभीष्टप्रदः । स चासौ द्योतरुः कल्पवृक्षश्च तस्य । विद्याशंकरसद्गुरोः आलयस्य

मन्दिरस्य निर्मापणं विधापनम् प्रास्तोष्ट प्रारब्धवान्। प्रपूर्वकात् ष्टुस्तुतावित्यस्माल्लुङ्। 'प्रस्तुते चोपक्रमते दशोपक्रम्यतेऽप्यमी। अभ्यादत्ते प्रक्रमते उपजानात्युपक्रमे।' इत्याख्यातचान्द्रिका। शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदाङ्कितश्रीमन्नृसिंह-
भारतीकरकमलसंजातसकलविद्याविशारदपण्डितपुण्डरीक-
मण्डलीमार्तण्डश्रीसच्चिदानन्दभारतीस्वामिभि-
र्निर्मापिते विद्वद्बालकश्रीलक्ष्मणशास्त्रिविरचिते
**गुरुवंशे महाकाव्ये षष्ठः सर्गः ॥**





॥ श्री विद्याशंकरालयः शृङ्गगिरि ॥

# सप्तमः सर्गः ॥

अथ भारतीकृष्णतीर्थाचार्यस्य विद्याशंकरस्य देवालयनिर्माणचरित्रादि वर्णयति—

श्रीमान्योगी भारतीकृष्णतीर्थः
कारुस्तोमेनागतं जक्कणाख्यम् ।
शिल्पिश्रेष्ठं सद्गुरोः स्फारतुंगं
प्रासादं त्वं द्राग्बधानेत्यवादीत् ॥ १ ॥

श्रीमानिति । श्रीमान्भारतीकृष्णतीर्थो योगी कारुस्तोमेन कारूणां शिल्पिनां स्तोमेन समूहेन आगतं जक्कणाख्यं जक्कण इत्याख्या यस्य तं शिल्पिश्रेष्ठं प्रति स्फारतुङ्गं स्फारं विशालं तुङ्गमुन्नतं सद्गुरोः विद्याशंकरस्य प्रासादं मन्दिरम् । प्रासादो देवभूभुजामित्यमरः । त्वं द्राक् शीघ्रं बधान बन्धनं कुरु । बधबन्धन इत्यस्माल्लोटि हलः श्नः शान इति शानजादेशः । इत्यवादीत् उक्तवान् । अस्मिन्सर्गे शालिनीवृत्तम् । शालिन्युक्ता म्तौतगौ गोब्धिलोकैरिति लक्षणात् ॥

प्रोचे शिल्पी योगिराजं ततोऽयं
बद्धा बह्व्यो देवशाला मयोर्व्याम् ।
बन्धुं शक्या तासु चित्राधिकैषा
सार्था च स्याच्छिल्पिताभ्यासिता मे ॥ २ ॥

प्रोच इति । ततोऽनन्तरमयं शिल्पी योगिराजं भारतीकृष्णतीर्थं प्रति प्रोचे बभाषे । मया उर्व्यां भूमौ देवशाला देवालयाः बहवो बद्धाः । सन्तीति शेषः । तासु देवशालासु चित्राधिका चित्रैरधिका एषा देवशाला बन्धुं बन्धनं कर्तुम् । अनिट्कात् बन्धेस्तुमुन् । शक्या मे मम शिल्पिताभ्यासिता । शिल्पिनः कर्म शिल्पिता तस्यां अभ्यासिता । अभ्यासिनो भावः अभ्यासिता अभ्यास इति यावत् । सार्था च सफला च स्यात् भवेत् ॥ २ ॥

तत्तादृक्षं देवगेहं विधातुं
विक्तं संख्यातीतमुत्सर्जनीयम् ।
भूयांस्येवं पोषयेऽहं कुटुम्बा-
न्येतत्कार्यं कर्तुमेव प्रयत्नात् ॥ ३ ॥

तदिति । तादृक्षं तद्देवगेहं देवालयं विधातुं निर्मातुं संख्यातीतमसंख्यं वित्तं धनमुत्सर्जनीयं दातव्यम् । 'त्यागो विहापितं दानमुत्सर्जनविसर्जने' इत्यमरः । एतत्कार्यं देवालयनिर्माणकार्यं कर्तुमेव प्रयत्नात् भूयांसि बहूनि कुटुम्बान्यहं पोषये पोषणं कुर्वे ॥ ३ ॥

भारः किं ते सह्य आर्येति सूक्तो-
प्यङ्गीचक्रे तापसेन्द्रस्तमर्थम् ।
एतद्धैर्यं भूरिवित्तव्ययेऽथ
ज्ञातुं प्रोचे देशिकेन्द्रं स शिल्पी ॥ ४ ॥

भार इति । हे आर्यश्रेष्ठ ते तव भारः बहुकुटुम्बपोषणभारः

मल्यः शोढव्यः किम् । शकिसहोश्चेति यत् । इति सूक्तः सुष्ठु कथितः । शिल्पिनेति शेषः । तापसेन्द्रो भारतीकृष्णतीर्थाचार्यस्तमर्थं बहुवित्त-दानरूपमुक्तमर्थमङ्गीचक्रे अङ्गीकृतवान् । अथानन्तरं स शिल्पी जक्कणाख्यो भूरिवित्तव्यये बहुद्रव्यव्यये एतद्धैर्यं एतस्याचार्यस्य धैर्यं धाष्टर्यं ज्ञातुं देशिकेन्द्रं गुरुश्रेष्ठं प्रोचे उक्तवान् ॥ ४ ॥

**एहि स्वामिन्प्राज्यमादाय वित्तं**
**नद्यास्तीरे शाकुनं किंचिदीक्षे ।**
**विश्वासायावश्यमित्यस्य वाचं**
**श्रुत्वा यासीत्तत्र शीघ्रं यतीन्द्रः ॥ ५ ॥**

एहीति । हे स्वामिन् ईशितः प्राज्यं बहुलं वित्तं धनमादाय गृहीत्वा नद्यास्तीर एहि आगच्छ । विश्वासाय प्रत्ययायावश्यं निश्चयेन कंचित्कमपि शाकुनम् । शकुन एव शाकुनस्तम् । 'शकुनस्तु शुभाशंसानिमित्ते शकुनः खगे' इति विश्वः । ईक्षे अवलोके । इत्यस्य शिल्पिनो वाक्यं श्रुत्वा यतीन्द्रः आचार्यस्तत्र नदीतीरे शीघ्रमयासीत् अगमत् ॥ ५ ॥

**भूरिद्रव्यं पूरयित्वाञ्जलौ स्वे**
**योगिन्नद्यां पातयेत्यस्य वाणी ।**
**यावद्वक्त्रान्निःसरत्याशु ताव-**
**त्तस्यामर्थं पञ्चशोऽपातयत्सः ॥ ६ ॥**

भूरीति । हे योगिन् स्वे स्वकीये अञ्जलौ मिलितप्रसृतिद्वये भूरि

बहु द्रव्यं धनं पूरयित्वा नद्यां पातय प्रक्षिप । इत्यस्य शिल्पिनः वक्त्रान्मुखात् वाणी वाक्यं यावन्निःसरति तावदाशु तस्यां नद्यामर्थं धनं स आचार्यः पञ्चशः पञ्चवारं अपातयत् प्रक्षिप्तवान् ॥ ६ ॥

ज्ञाते धैर्ये शिल्पिना योगिराजः
प्रारेभे तत्कच्छपस्थापनादि ।
नित्यं नित्यं तत्कृते द्रव्यदायी
सङ्ख्यां पत्र्यां लेखितुं नान्वजानीत् ॥ ७ ॥

ज्ञात इति । शिल्पिना जक्कणाख्येन धैर्ये एवं ज्ञाते सति योगिराजः आचार्यः तत्कच्छपस्थापनादि तस्य देवालयस्य कच्छपस्थापनादि कूर्मप्रतिष्ठापनादिकार्यम् । आदिशब्देन इष्टकास्थापनगर्तपूरणादिकमुच्यते । प्रारेभे प्रारब्धवान् । नित्यं नित्यं दिने दिने तत्कृते देवागारबन्धनकृते द्रव्यदायी द्रव्यं ददातीति द्रव्यदायी सन् सङ्ख्यां द्रव्यसङ्ख्यां पत्र्यां पत्रिकायां लेखितुं नान्वजानीत् अनुज्ञां न कृतवान् ॥ ७ ॥

तुष्टाः पुष्टाः शिल्पिनोऽनल्पशोभं
देवागारं पूर्णकामा बबन्धुः ।
एतद्दृष्ट्वा विश्वकर्मापि चित्तं
सृष्टिः किं वा स्वेत्यवाप्तभ्रमोऽभूत् ॥ ८ ॥

तुष्टा इति । तुष्टाः संहृष्टाः पुष्टाः अभिलषितान्नदानादिभिः पुष्टाः शिल्पिनः पूर्णकामाः सन्तः संपूर्णमनोरथाः सन्तः अनल्प-

शोभं अनल्पा बह्वी शोभा यस्मिन्तत्तथोक्तं देवागारं विद्याशङ्करम-न्दिरं बबन्धुः बन्धनं कृतवन्तः । विश्वकर्मापि चित्रमाश्चर्यकार्येतद्दे-वागारम् दृष्ट्वा स्वा स्वकीया सृष्टिः किं वेत्यवाप्तभ्रमः अवाप्तः भ्रमो येन स तथोक्तोऽभूत् ॥ ८ ॥

चक्रुः पङ्क्तीरूर्ध्वमूर्ध्वं समन्ता-
द्वन्धर्वाणां कुञ्जराणां हरीणाम् ।
मर्त्यर्षीणां किंच रात्रिंचराणां
गन्धर्वाणां चित्रितानां शिलासु ॥ ९ ॥

चक्रुरिति । शिल्पिनः शिलासु समन्तात्सर्वतः चित्रितानां संजा-तचित्राणां गन्धर्वाणामश्वानां कुञ्जराणां गजानां हरीणां सिंहानाम् मर्त्यर्षीणां मनुष्याणां ऋषीणां च किं च रात्रिंचराणां राक्षसानाम् गन्धर्वाणां विश्वावसुप्रभृतीनां पङ्क्तीः श्रेणीरूर्ध्वमूर्ध्वमुपर्युपरि चक्रुः कृतवन्तः ॥ ९ ॥

येनायं षड्दर्शनस्थापनेश-
स्तेनास्याभूद्द्वारषट्केन वेश्म ।
ऊर्ध्वं विघ्नेशानवाग्भ्यां च पार्श्व-
द्वन्द्वे मध्ये हस्तिलक्ष्म्यन्वितेन ॥ १० ॥

येनेति । येन कारणेनायं विद्यातीर्थाचार्यः षड्दर्शनस्थापनेशः षण्णां शैवादीनां दर्शनानां स्थापनस्यावस्थापनस्य ईशः ईशिता । अभूदिति शेषः । तेन कारणेनास्य वेश्म मन्दिरं पार्श्वद्वन्द्वे ऊर्ध्वे

उपरि विघ्नेशानवाग्भ्यां गणपतिवाणीभ्यां मध्ये द्वारोपरितनमध्यभागे हस्तिलक्ष्म्या । हस्तिभ्यामभिषिक्ता लक्ष्मीर्हस्तिलक्ष्मीः । मध्यमपदलोपीसमासः । तया चान्वितेन युक्तेन द्वारषट्केण अभात् भातिस्म ॥ १० ॥

प्रादक्षिण्येनाभितो स्वाकृतीनां
भित्तौ श्रेणी भासते देवतानाम् ।
मार्तण्डादिद्योचराणां नवानां
मूर्तिर्मृत्योश्चित्रगुप्तस्य चैवम् ॥ ११ ॥

प्रादक्षिण्येनेति । अस्यागारस्य अभितः समन्तात् । प्रादक्षिण्येन प्रदक्षिणतया भित्तौ कुड्ये देवतानां देवतासंबन्धिनीनां आकृतीनामाकाराणाम् । श्रेणी पङ्क्तिर्भासते दीप्यते । नवानां नवसङ्ख्यानां मार्तण्डादिद्योचराणां सूर्यादिग्रहाणां मृत्योश्चित्रगुप्तस्य च मूर्तिः एवं भासते ॥ ११ ॥

श्रीमल्लक्ष्मीनारसिंहस्य साक्षा-
दिष्टार्थानां दातुराभाति रूपम् ।
धीमद्वन्द्योमामहेशस्य चैवं
वर्वर्ति श्रीदक्षिणामूर्तिमूर्तिः ॥ १२ ॥

श्रीमदिति । इष्टार्थानां दातुः श्रीमल्लक्ष्मीनारसिंहस्य । श्रीमतः कान्तिमतः लक्ष्मीनृसिंहस्य रूपं स्वरूपं साक्षात्प्रत्यक्षमाभाति । एवं धीमद्वन्द्योमामहेशस्य धीमद्भिर्मनीषिभिर्वन्द्यस्य स्तुत्यस्योमाम-

हेशस्य रूपं च भातीति पूर्वेणान्वयः श्रीमद्दक्षिणामूर्तिमूर्तिः श्रीदक्षिणामूर्तेर्मूर्तिः वर्वर्ति अतिशयेन वर्तते । वृत्वर्तन इत्यस्मात् यङ्लुकि रुग्रिकौचलुकीत्यभ्यासस्य रुगागमः ॥ १२ ॥

श्रीगायत्रीभक्तयुग्मेन युक्ता
लोकेशानां पङ्क्तिरेवं नवानाम् ।
दैत्यारातेश्चारवश्चावतारा
मार्कण्डेयाश्लिष्टमृत्युंजयोऽपि ॥ १३ ॥

श्रीति । भक्तयुग्मेन भक्तयुगलेन युक्ता श्रीगायत्रीमूर्तिः । एवं नवानां लोकेशानां ब्रह्मणां ब्रह्ममूर्तीनां पङ्क्तिः श्रेणिः । चारवो मनोहराः दैत्यारातेर्दानवारेरवतारा मत्स्यादिकल्क्यन्तमूर्तयः । मार्कण्डेयेन मृकण्डुसूनुना आश्लिष्टो मृत्युभयादालिङ्गितो मृत्युंजयः मृत्युंजयमूर्तिरपि वर्वर्तीति पूर्वेणान्वयः ॥ १३ ॥

गौरीशम्भ्वोः षण्मुखासक्तिभाजो-
श्चेतोहारिण्यर्धनारीश्वरस्य ।
मूर्तिः किं च त्रैपुरान्तकयपीड्या
विद्धस्यैवं मारबाणैः पुरारेः ॥ १४ ॥

गौरीति । षण्मुखासक्तिभाजोः षण्मुखे कुमारे आसक्तिमास्थां भजत इति षण्मुखासक्तिभाजौ तयोः षण्मुखमूर्तियुक्तयोरिति भावः । गौरीशंभ्वोः भवानीशंकरयोः अर्धनारीश्वरस्य अर्धे नारी यस्य सः अर्धनारिः अर्धनारिश्चासावीश्वरश्च अर्धनारीश्वरः तस्य ।

त्रैपुरान्तकी। त्रयाणां पुराणां समाहारस्त्रिपुरं तस्यान्तकस्त्रिपुरान्तकस्तस्येयं त्रैपुरान्तकी। एवं मारबाणैर्मन्मथशरैर्विद्धस्य जातवेधस्य पुरारेः शिवस्य च ईड्या स्तुत्या चेतोहारिणी मनोहारिणी मूर्तिर्वर्वर्तीति पूर्वेणान्वयः ॥ १४ ॥

ख्यातामूर्तिर्भाति चैदम्बरी सा
वध्यं कंचिच्चूर्णयन्ती पदेन।
पीयूषाढ्यान्बिभ्रतोऽदभ्रकुम्भा-
नायुर्दातुः किं च मृत्युंजयस्य ॥ १५ ॥

ख्यातेति। पदेन चरणेन वध्यं हननीयं कंचित् कमपि चूर्णयन्ती पिषन्ती ख्याता प्रसिद्धा चैदम्बरी चिदम्बरसंबन्धिनी। किंच आयुर्दातुः आयुषो दाता आयुर्दाता तस्य। पीयूषाढ्यानमृतसंपन्नान् अदभ्रकुम्भान्बहुकलशान्। अदभ्रं बहु इत्यमरः। बिभ्रतो धारयतो मृत्युंजयस्य मूर्तिः भाति प्रकाशते ॥ १५ ॥

सच्छिष्येभ्यो बोधयन्स्वं रहस्यं
वाजिग्रीवो राजते पूज्यमानः।
दर्वीं बिभ्रत्यन्नपूर्णा च वर्ण्या
वर्णेशानी शारदाम्बाखिलाम्बा ॥ १६ ॥

सदिति। सच्छिष्येभ्य उत्तमछात्रेभ्यः कुम्भसंभवादिभ्यः स्वमात्मीयं रहस्यं गोपनीयं बोधयन्नवगमयन्वाजिग्रीवः वाजिनोऽश्वस्य ग्रीवेव ग्रीवा कन्धरा यस्य स तथोक्तो हयग्रीवः पूज्यमानः सन्

राजते । दर्वीं बिभ्रती धारयन्ती वर्ण्या वर्णनीया अन्नपूर्णा च अन्नपूर्णेश्वरी मूर्तिश्च राजते । उक्तं च । उद्यत्सहस्रद्युतिबिम्बगौ-रामुत्तुंगपीनस्तनलम्बहाराम् । माणिक्यदर्वीमधुपात्रहस्तां स्मरन्ति सन्तः स्मरवैरिकान्तामिति ॥ वर्णेशानी वर्णानां पञ्चाशद्वर्णानामी-शानी ईश्वरी अखिलाम्बा समस्तजननी शारदाम्बा च राजते ॥

हृल्लेखेशी प्रोल्लसज्ज्ञानदात्री
पार्श्वेभाभ्यां स्नापिता लोकमाता ।
धीरैर्नम्याश्चारवो भैरवाश्च
ध्यायद्रुद्रो वीरभद्रोऽपि भृङ्गी ॥ १७ ॥

हृल्लेखेति । प्रोल्लसज्ज्ञानदात्री प्रोल्लसतः प्रकृष्टोल्लासवतः ज्ञान-स्य दात्री हृल्लेखेशी हृल्लेखाया मन्त्रविशेषस्येशी ईश्वरी भुवनेश्वरी पार्श्वेभाभ्यां पार्श्वद्वयस्थिताभ्यां गजाभ्यां स्नापिता अभिषिक्ता । ग्लास्नावनुवमांचेति मित्वाविकल्पाद्ध्रस्वाभावः । लोकमाता लक्ष्मी-र्धीरैः प्राज्ञैर्नम्या नमस्कार्या चारवो मनोहराः भैरवाश्च असिताङ्गा-दयः । ध्यायद्रुद्रो भृङ्ग्यपि राजन्त इति शेषः ॥ १७ ॥

हर्ता विघ्नान्हस्तिवक्त्रो द्विहस्तः
सुब्रह्मण्यः सेवकानां शरण्यः ।
एवं देवाश्चित्रितास्तत्र पङ्क्तौ
पार्थक्येनाप्यालयाहां विभान्ति ॥ १८ ॥

हर्तेति । विघ्नान्हर्ता विघ्नपरिहरणशीलः । न लोकाव्ययेति

षष्ठीनिषेधः । द्विहस्तः द्वौ हस्तौ यस्य स द्विहस्तो हस्तिवक्त्रो गजमुखः । सेवकानां सेवाकारिणां शरण्यः शरणयितुमर्हः सुब्रह्मण्यः षण्मुखः एवमित्थं तत्र पङ्क्तौ चित्रिताः संजातचित्राः पार्थक्येनापि पृथग्भावेनाप्यालयार्हाः मन्दिरं कृत्वा प्रतिष्ठापनं कर्तुं योग्या देवा विभान्ति विशेषेण प्रकाशन्ते ॥ १८ ॥

**तस्या श्रेण्या ऊर्ध्वतः खेचराणां**
**रेखा लोकालोकनीया विभाति ।**
**एवं देवा आवृणन्तो वसन्ति**
**श्रीमद्विद्याशंकरं देवदेवम् ॥ १९ ॥**

तस्या इति । तस्याः श्रेण्या उक्तदेवतापङ्क्तेरूर्ध्वत उपरिभागे लोकालोकनीया लोकैर्जनैरालोकनीया दर्शनीया खेचराणां सिद्ध-विद्याधराणां रेखा पङ्क्तिर्विभाति शोभते । एवमनेन प्रकारेण देवदेवं देवानां पूज्यम् । देवः पूज्ये पिनाकिनीत्यमरः । श्रीमद्विद्याशंकरमा-वृणन्तः समन्तात्परिवाररूपेण सन्तः देवता वसन्ति ॥ १९ ॥

**षड्द्वाराणां द्वादशद्वारपाला**
**अत्यन्तोच्चप्रस्फुरन्मान्दिरस्य ।**
**तत्राप्येवं चित्रिता देवताश्चा-**
**शेषाः शेषेणापि वक्तुं न शक्याः ॥ २० ॥**

षडिति । अत्यन्तोच्चप्रस्फुरन्मन्दिरस्य अत्यन्तोन्नतस्य प्रस्फुरत्-मन्दिरस्य षड्द्वाराणां षण्णां द्वाराणां प्रतीहाराणां द्वादश द्वादशसं-

स्याकाः द्वारपालाः द्वाररक्षकमूर्तयः सन्तीति शेषः । अत्रापि मन्दिरोपरिभागेऽपि एवमनेन प्रकारेण चित्रिता अशेषाः समस्ता देवताश्च शेषेणापि फणीन्द्रेणापि वक्तुं कथयितुं न शक्याः ॥२०॥

**देवैः सेव्यो जातरूपप्रकाशी**
**शैलैः पादैः संवृतो देवगेहैः ।**
**तुंगैः शृंगैः संगतः शंकरस्या-**
**वासः सोऽयं मेरुरेवावभाति ॥ २१ ॥**

देवैरिति । सोऽयं शंकरस्य विद्याशंकरस्यावासः प्रासादो देवैः प्रागुक्तमार्तण्डादिदेवैः । अन्यत्र इन्द्रादिभिश्च सेव्यः सेवनीयो जातरूपप्रकाशी जातानां रूपाणां देवतारूपाणां प्रकाशोऽस्यास्तीति जातरूपप्रकाशी । अन्यत्र जातरूपस्य सुवर्णस्य प्रकाशवान् शैलैः शिलासंबन्धिभिर्देवगेहैः परितः स्थितदेवालयैः पादैः प्रत्यन्तपर्वतैः संवृतः परिवृतस्तुङ्गैरुन्नतैः शृङ्गैः शिखरैः संगतो मेरुरेवावभाति भासते । श्लेषानुप्राणितैकदेशविवर्तिरूपकम् ॥ २१ ॥

**प्रादक्षिण्यं कस्य कुर्याम देवे-**
**त्येवं प्रष्टुं राशयो द्वादशापि ।**
**स्तम्भेष्वन्तर्द्वादशस्वाश्रयन्तः**
**साक्षान्मेषाद्यात्मनैक्ष्यन्त लोकैः ॥ २२ ॥**

प्रादक्षिण्यमिति । हे देव कस्य प्रादक्षिण्यम् प्रदक्षिणमेव प्रादक्षिण्यं कुर्याम निदध्याम । एवमनेन प्रकारेण प्रष्टुं द्वादशापि राशयो

मेषादिमीनान्ता राशयः अन्तर्द्वादशसु स्तम्भेष्वाश्रयन्तः साक्षान्मेषाद्या इव लोकैरैक्ष्यन्त ईक्षिताः । ईक्षदर्शने कनयोरित्यस्मात्कर्मणि यक्लिुङ् । प्रसिद्धमेरोः प्रदक्षिणं कुर्वन्तो वयमस्मिन्मेरावुदिते सति कस्य मेरोः प्रदक्षिणे कृतविषय स्म इति प्रश्नस्य स्तम्भाश्रयफलत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा ॥ २२ ॥

**बुक्कक्ष्मेन्द्रो माधवं मन्त्रिधुर्यं**
**धीमद्वर्यं प्रैषयत्तन्नियोगात् ।**
**भूमीपाला भासमानाः समन्ता-**
**दत्रायातः साकमेतेन सर्वे ॥ २३ ॥**

बुक्कक्ष्मन्द्रेति । बुक्कक्ष्मेन्द्रो बुक्कमहाराजो धीमद्वर्यं बुद्धिमच्छ्रेष्ठं माधवं माधवाख्यं मन्त्रिधुर्यममात्यधुरंधरं तन्नियोगात् तस्य भारतीकृष्णतीर्थाचार्यस्य नियोगात् प्रैषयत् प्रेषितवान् । समन्तात्सर्वतो भासमानाः प्रकाशमानाः एतेन माधवामात्येन साकं सह सर्वे भूमिपालाः अत्र शृङ्गपुर्यामायाताः आगताः । अभूवन्निति शेषः ॥

**आकार्यैवं सर्वतः कोविदाग्र्या-**
**न्पुर्या वीथीस्तोरणाद्यैर्विभूष्य ।**
**मान्यैर्मन्त्रैस्तन्त्रगैस्तान्त्रिकेभ्यः**
**प्रादाल्लिङ्गस्थापनायाभ्यनुज्ञाम् ॥ २४ ॥**

आकार्येति । एवं तद्वदेव सर्वतः सर्वदेशेभ्यः कोविदाग्र्यान् विद्वच्छ्रेष्ठानाकार्याकारणं कारयित्वा पुर्याः शृङ्गपुर्या वीथीस्तोरणा-

द्येर्विभूष्यालंकृत्य तन्त्रगोमान्यैर्मन्त्रैस्तान्विवेकमग्रस्तन्त्रविज्ञो लिंगस्थापनायाभ्यनुज्ञां प्रादात् दत्तवान् ॥ २४ ॥

लग्ने सौम्ये साधु विघ्नेशपूजां
पुण्याहश्रीवाचनं किं च नान्दीम् ।
मुन्याज्ञप्तः सादरं सत्पुरोधा
आधायर्त्विक्स्तोमवर्यां वितेने ॥ २५ ॥

लग्न इति । सत्पुरोधा मुन्याज्ञप्तो मुनिना भारतीकृष्णतीर्थाचार्येणाज्ञप्तः सन् सौम्ये शुभग्रहयुक्ते लग्ने मुहूर्ते विघ्नेशपूजां पुण्याहश्रीवाचनं किं च नान्दीं नान्दीसमाराधनं सादरं आदरेण सह साधु सुष्ठ्वाधाय ऋत्विक्स्तोमवर्यां ऋत्विजां याजकानां स्तोमस्य समूहस्य वर्यां वरणं वितेने चक्रे ॥ २५ ॥

देशाद्देशादागतैः श्रोत्रियौघै-
राम्नायानां भूरिपारायणानि ।
शैवादीनां सन्मनूनां जपांश्चा-
स्तोकाँल्लोकश्रीकरोऽचीकरत्सः ॥ २६ ॥

देशादिति । स पुरोहितो देशाद्देशादगतैः श्रोत्रियौघैः श्रोत्रियसमूहैराम्नायानां वेदानां भूरिपारायणानि बहुपारायणानि शैवादीनां शैवदौर्गवैष्णवादीनां सन्मनूनां अभ्यर्हितमन्त्राणामस्तोकाननल्पान् जपांश्च लोकश्रीकरो जनसंपत्करः सन् अचीकरत्कारितवान् । णिजन्तात्करतेर्लुङ् ॥ २६ ॥

औदार्योद्योगिराजो नियोगा-
च्छिल्पीन्द्रं सोऽनल्पशिल्पप्रतीतम् ।
संमानार्हैर्वस्त्रभूषाधनाद्यै-
र्हर्षोत्कर्षं सानुगं प्रापिपच्च ॥ २७ ॥

औदार्येति । स पुरोहितः अनल्पशिल्पप्रतीतमनल्पैर्बहुभिः शिल्पैः प्रतीतं प्रसिद्धं सानुगं सपरिवारं शिल्पीन्द्रं शिल्पिश्रेष्ठं जक्कणाख्यं संमानार्हैः प्रशस्तबहुमानयोग्यैर्वस्त्रभूषाधनाद्यैः । आदिशब्देन भूम्यादय उच्यन्ते । तैर्हर्षोत्कर्षं प्रापिपच्च प्रापयितवानपि ॥ २७ ॥

शिल्पीन्द्रात्प्रासादमादाय दातु-
श्चक्रे पात्रेष्वङ्कुरारोपणानि ।
लिङ्गस्यैवं साधुतोयाधिवासं
शुद्धिं तस्याप्येष चक्रे विधिज्ञः ॥ २८ ॥

शिल्पीन्द्रादिति । विधिज्ञ एष पुरोहितः दातुः शिल्पीन्द्रात्प्रासादं देवालयमादाय गृहीत्वा पात्रेषु शरावेष्वङ्कुरार्पणानि चक्रे । एवं लिङ्गस्य साधु सुष्ठु तोयाधिवासं जलाधिवासं तस्यापि प्रासादस्य शुद्धिं च कृतवान् ॥ २८ ॥

आधान्मोदाद्धिम्बबोधं पुरोधा-
द्वैतीयीके तस्य धान्याधिवासम् ।
तार्तीयीके त्वह्नि शीलैर्विशिष्टैः
शिष्टैर्जुष्टः सुप्रतिष्ठापनं च ॥ २९ ॥

आधादिति । शीलैर्विशिष्टः शिष्टैर्जुष्टः सेवितः पुरोधाः पुरोहितः द्वैतीयीके द्वितीयेऽह्नि दिने मोदात्संतोषात्तस्य लिङ्गस्य बिम्बशोधं बिम्बशुद्धिं धान्याधिवासं च मोदादाधात् अकरोत् । तार्तीयीके तृतीयेऽह्नि सुप्रतिष्ठापनं च प्रतिष्ठां चाधात् ॥ २९ ॥

विघ्नेशादीनेतदावारदेवान्
सुस्थाप्याधात्सद्ध्वजारोहणं च ।
तोषादेष प्राग्यशालाप्रवेशं
जन्माप्यग्नेस्तत्र होमं च सर्वम् ॥ ३० ॥

विघ्नेशादीनिति । एष पुरोहितः एतदावारदेवानेतस्य विद्याशंकरस्यावारदेवानावरणदेवता विघ्नेशादीन्गणपतिप्रभृतीन्सुस्थाप्य सुष्ठु स्थापयित्वा सद्ध्वजारोहणं सतः प्रशस्तस्य ध्वजस्य केतोरारोहणं प्राग्यशालाप्रवेशं प्राग्यायाः शालायाः प्रवेशं तत्र शालायामग्नेस्तान्त्रिकाग्नेर्जन्म जननं सर्वं च होमं तोषाद्धर्षादाधादकार्षीत् ॥ ३० ॥

शान्तिप्रायश्चित्तचर्या तुरीये
पञ्चब्राह्मान्पञ्चमे किं च होमान् ।
श्रेष्ठः षष्ठे तां दिशाहोममुख्यान्
चक्रे लिङ्गश्रीनिरीक्षां यथावत् ॥ ३१ ॥

शान्तीति । श्रेष्ठः स पुरोहितः तुरीये दिने चतुर्थदिवसे शान्तिप्रायश्चित्तचर्यां शान्तिप्रायश्चित्ताख्यं कर्म । पञ्चमे दिवसे पञ्चब्राह्मान् होमान् किं च षष्ठे दिने दिशाहोममुख्यान् दिशाहोमप्रभृतीन्

विधीन् यथावदुक्तप्रकारेण लिङ्गश्रीनिरीक्षां लिङ्गशोभानिरीक्षणं च चक्रे ॥ ३१ ॥

**होमं चक्रे सप्तमे चाधिवासं**
**साहस्रेणास्याभिषेकं सुकुम्भैः ।**
**प्रोद्यद्विद्याशंकरेशस्य हृद्यं**
**जाह्नव्याद्यैः पूरितैः पुण्यतोयैः ॥ ३२ ॥**

होममिति । सप्तमे दिने अधिवासमधिवासाख्यं होमं जाह्नव्याद्यैः भागीरथीप्रभृतिभिः पुण्यतोयैः पुण्यप्रदोदकैः पूरितैः साहस्रेण सहस्रसंख्याकेन सुकुम्भैः सुष्ठु पूजितकुम्भैः प्रोद्यद्विद्याशंकरेशस्य प्रकर्षेणोदितस्य विद्याशंकरदेवस्य हृद्यमभिषेकं च चक्रे ॥ ३२ ॥

**प्राज्ञैः शिष्टैर्वेदघोषैर्विशेषा-**
**द्राज्ञां स्तोमैर्योगिराजोऽष्टमेऽह्नि ।**
**रम्यं विद्याशंकरस्योत्सवाग्र्यं**
**नृत्यैर्वाद्यैः श्रीरथेऽकारयत्सः ॥ ३३ ॥**

प्राज्ञैरिति । अष्टमेऽह्नि अष्टमे दिने योगिराजः सः भारतीकृष्णतीर्थाचार्यः प्राज्ञैः शिष्टैः सह विशेषाद्वेदघोषैः राज्ञां स्तोमैर्नृत्यैर्वाद्यैश्च सह विद्याशंकरस्य श्रीरथे संप्रयुक्ते रथे रम्यं रमणीयमुत्सवाग्र्यमकारयत् ॥ ३३ ॥

**अत्युत्साहात्साधुतिथ्यां नवम्यां**
**दायं दायं गन्धतोयं प्रजाभ्यः ।**

मोदाद्दाधादुत्सवं कुङ्कुमाख्यं
दीक्षान्तार्हं मङ्गलस्नानमेवम् ॥ ३४ ॥

अत्युत्साहादिति । साधुतिथ्यामुत्तमतिथौ नवम्यां प्रजाभ्यो गन्धतोयमत्युत्साहात् दायं दायं दत्वा दत्वा कुङ्कुमाख्यमुत्सवं मोदात्संतोषादेवं तद्वदेव दीक्षान्तार्हमवभृथकालयोग्यं मङ्गलस्नानमाधादकार्षीत् ॥ ३४ ॥

योगीन्द्रोऽयं दक्षिणादानभूम्ना
सर्वानृत्विक्सूरिणः संप्रतोष्य ।
भूदेवेभ्यो भूरिमृष्टान्नदानं
लोकाश्चर्यौदार्यशीलः प्रचक्रे ॥ ३५ ॥

योगीन्द्रेति । लोकाश्चर्यौदार्यशीलो लोकानां जनानामाश्चर्यकृत् उदारस्य कर्म औदार्यं शीलं यस्य स तथोक्तोऽयं योगीन्द्रः आचार्यो दक्षिणादानभूम्ना दक्षिणादानस्य बहुत्वेन सर्वानृत्विक्सूरिणः ऋत्विजः सूरिणश्च संप्रतोष्य भूदेवेभ्यो ब्राह्मणेभ्यो भूरि बहु मृष्टान्नदानं प्रचक्रे ॥ ३५ ॥

हृद्यां विद्याशंकरेशप्रतिष्ठां
सद्योभक्ताभीष्टदात्रीं विधाय ।
संभाव्यैतान्माधवामात्यमुख्या-
न्प्राप्तांस्तोषात्पैपिपत्सर्वभूपान् ॥ ३६ ॥

हृद्यामिति । स आचार्यः सद्यो भक्ताभीष्टदात्रीं भक्तानामभी-

इदानीं हृद्यां विद्याशंकरेशप्रतिष्ठां विधाय माधवामात्यमुख्यान् माधवमन्त्रीप्रमुखान् प्राप्तान् एतान् सर्वभूपान् संभाव्य संमान्य तोषात्संतोषात् प्रैषिषत् प्रेषितवान् ॥ ३६ ॥

**एतद्वृत्तं लेखयित्वा समस्तं**
**बुक्कक्ष्मेन्द्रासन्नमाशास्तिपत्रीम् ।**
**वेद्यं विद्याशंकरस्य प्रसादं**
**प्रैषीद्योगीन्द्रोऽथ मन्त्राक्षतांश्च ॥ ३७ ॥**

एतदिति । अथानन्तरं योगीन्द्रः आचार्यः समस्तमेतद्वृत्तं लेखयित्वा बुक्कक्ष्मेन्द्रासन्नं बुक्कमहाराजसमीपं प्रति वेद्यां वेत्तुं योग्यामाशास्तिपत्रीमाशीर्वादपत्रिकां विद्याशंकरेशस्य प्रसादं मन्त्राक्षतांश्च मन्त्रसंभाविताक्षतांश्च प्रैषीत् प्रेषितवान् ॥ ३७ ॥

**काशीस्थायाकारणाज्ञप्तिपत्रीं**
**विद्यारण्यश्रीमुनीन्द्राय सैषः ।**
**तं प्रत्येवं प्राहिणोत्प्रेषयेति**
**स्फीतप्रीतिर्भारतीकृष्णतीर्थः ॥ ३८ ॥**

काशीति । सैष भारतीकृष्णतीर्थः । स्फीता बहुला प्रीतिर्यस्य स तथोक्तः सन् काशीस्थाय विद्यारण्यश्रीमुनीन्द्रायैवं तद्वदेव तं प्रति बुक्कमहाराजं प्रति प्रेषयेति । लिखित्वेति शेषः । आकारणाज्ञप्तिपत्रीमाह्वानाज्ञापत्रिकां प्राहिणोत् प्रेषितवान् ॥ ३८ ॥

पत्रीमेतां माधवार्येण दत्तां
भक्त्या धृत्वा मूर्ध्नि संतोषसान्द्रः ।
तस्मै स्वीयां चापि विज्ञप्तिपत्रीं
वाराणस्यां प्राहिणोत्पार्थिवेन्द्रः ॥ ३९ ॥

पत्रीमिति । माधवार्येण दत्तामेतामाज्ञप्तिपत्रीं भक्त्या मूर्ध्नि धृत्वा संतोषसान्द्रः पार्थिवेन्द्रस्तस्मै विद्यारण्यश्रीमुनीन्द्राय स्वीयां स्वकीयाम् विज्ञप्तिपत्रीं विज्ञापनपत्रिकाम् चापि वाराणस्यां काश्याम् प्राहिणोत् प्रहितवान् ॥ ३९ ॥

विद्यारण्यः श्रीमुनीन्द्रोऽपि वृत्तं
सर्वं ज्ञात्वा हर्षवान्सर्वशिष्यैः ।
आदायेशस्वप्नसंप्राप्तलिङ्गं
मोदादागात्पूजितो राजधानीम् ॥ ४० ॥

विद्यारण्येति । विद्यारण्यश्रीमुनीन्द्रोऽपि वृत्तं सर्वं ज्ञात्वा सर्वशिष्यैः पूजितः सन् हर्षवान् सन्नीशस्वप्नसंप्राप्तलिङ्गं ईशस्वप्नेन विश्वेश्वरस्वप्नेन संप्राप्तं लब्धं लिङ्गमादाय गृहीत्वा राजधानीं विजयनगरीं प्रति मोदात्संतोषादागात् आगतवान् ॥ ४० ॥

संभाव्यैनं संभ्रमाद्बुक्कभूपो
विद्यारण्यं मान्यमान्यप्रगण्यम् ।
साकं तेनास्तोकभक्त्या समेतः
श्रेयस्कर्यां शृङ्गपुर्यां समागात् ॥ ४१ ॥

संभाव्येति। बुक्कभूपो मान्यमौन्यग्रगण्यम् अग्रेगणनीयमेनं विद्यारण्यं संभ्रमादौत्सुक्यात्संभाव्य सत्कृत्य अस्तोकभक्त्यानल्पया भक्त्या समेतो युक्तः तेन विद्यारण्याचार्येण साकं सह श्रेयस्कर्यां पुण्यकारिण्यां शृङ्गपुर्यां समागात् समागतवान् ॥ ४१ ॥

दृष्ट्वा ज्येष्ठं तुष्टिमान्पट्टभद्रं
भास्वत्कीर्तिं भारतीकृष्णतीर्थम् ।
नत्वा क्षेमप्राश्निकस्तापसेन्द्रः
सर्वं वृत्तं भाषिता तोषमाप ॥ ४१ ॥

दृष्ट्वेति। ज्येष्ठं प्रागेवाश्रमग्रहणेन ज्येष्ठं भास्वत्कीर्तिं भास्वती कीर्तिर्यस्य तं पट्टभद्रं पट्टाभिषिक्तं भारतीकृष्णतीर्थमाचार्यं दृष्ट्वा तुष्टिमान् संतोषवान् क्षेमप्राश्निकः क्षेमस्य कुशलस्य प्राश्निकः प्रश्नं चरति प्राश्निकः। तापसेन्द्रो विद्यारण्याचार्यः सर्वं समस्तं वृत्तं भाषिता सन् भाषणशीलः सन् तोषमाप प्राप ॥ ४२ ॥

शं भाषित्वान्योन्यसंतोषवन्तौ
श्रीमद्विद्याशंकरेशस्य सद्म ।
विद्यारण्यो भारतीकृष्णतीर्थ-
श्चोभौ नत्वा हर्षवर्षानगाताम् ॥ ४३ ॥

शमिति। शं सुखेन शमित्यव्ययात्सुखाद्येकादव्ययादाप्सुप इति तृतीयायाल्लुक्। भाषित्वा सल्लप्य अन्योन्यसंतोषवन्तौ। अन्योन्यस्मात्परस्परस्मात्संतोषवन्तौ श्रीमद्विद्याशंकरेशस्यायतनं सद्म नत्वा भार-

तीकृष्णतीर्थो विद्यारण्यश्चोभौ हर्षवर्षान् संतोषवृष्टीः अगातां प्राप्नु॰ताम् ॥ ४३ ॥

**चक्राते च प्रीतिसान्द्रौ मुनीन्द्रौ**
**स्तोत्रं स्वस्वप्रौढिकार्यानुरूपम् ।**
**युष्मत्पुण्यं पूर्णमेवेति मन्ये**
**कार्यैश्चित्रैरित्यवादीन्नृपस्तौ ॥ ४४ ॥**

चक्राते इति । प्रीतिसान्द्रौ प्रीत्या निबिडौ मुनीन्द्रौ भारतीकृष्णतीर्थविद्यारण्याचार्यौ स्वस्वप्रौढिकार्यानुरूपं आत्मीयात्मीयप्रौढिमिलितकार्यसदृशं स्तोत्रं चक्राते कृतवन्तौ । नृपो बुक्कमहाराजस्तावाचार्यौ प्रति चित्रैर्विस्मयावहैः कार्यैर्देवालयनिर्माणविजयनगरीनिर्माणादिकार्यैर्युष्मत्पुण्यं युवयोः पुण्यं पूर्णमिव संपूर्णमिवेत्यहं मन्ये जाने इत्यवादीदुक्तवान् ॥ ४४ ॥

**सर्वोऽप्येषस्त्वद्विभूतिप्रभाव-**
**स्त्वं रुद्राक्षागण्यकारुण्यपात्रम् ।**
**उद्यत्पुण्यश्रीफलानां निधानं**
**चेत्याचख्यौ भारतीकृष्णतीर्थः ॥ ४५ ॥**

सर्व इति । एष सर्वोऽप्ययं समस्तोऽपि त्वद्विभूतिप्रभावः तव विभूतेरैश्वर्यस्य प्रभावः सामर्थ्यं त्वं रुद्राक्षागण्यकारुण्यपात्रम् । रुद्रस्य शिवस्य अक्ष्णामगण्यस्यापरिमेयस्य कारुण्यस्य कृपायाः पात्रमर्हः । उद्यत्पुण्यश्रीफलानां निधानं निधिश्च । इति भारतीकृ-

ण्णतीर्थ आचख्यावाख्यातवान् ॥ ४५ ॥

श्रीमद्विद्यातीर्थयोगानुभावा-
ज्जातं सर्वं यद्युवां तत्कराब्जात् ।
चित्रं लब्धानुग्रहौ संविभागः
शिष्योऽहं वां मा स्तुतं त्वित्यवोचत् ।४६॥

श्रीमदिति । श्रीमद्विद्यातीर्थयोगानुभावात्सर्वं जातम् । यद्यस्मा-त्कारणात् युवां तत्कराब्जात्तत्करकमलाल्लब्धानुग्रहौ लब्धोऽनुग्रहो याभ्यां तौ सन्तौ संविभागः प्रकाशेथे । वां युवयोरहं शिष्यः । मां मा स्तुतं मा स्तोत्रं कुरुतम् । इत्यवोचत् उक्तवान् ॥ ४६ ॥

इत्युक्त्वायं बुक्कभूमीधरेन्द्रो
विद्यारण्यानीतलिङ्गप्रतिष्ठाम् ।
साकं सद्वृत्त्यग्रहारादिधर्मैः
श्रीमद्विद्याशंकरप्रेम्ण आधात् ॥ ४७ ॥

इतीति । अयं बुक्कभूमीधरेन्द्रः इत्युक्तप्रकारेणोक्त्वा श्रीविद्या-शंकरस्य प्रेम्णे प्रीतये सद्वृत्त्यग्रहारादिधर्मैः सन्त्यो वृत्तयो यस्मिन्स तथोक्तः स चासावग्रहारश्च स एवादिर्येषां तैर्धर्मैः साकं सह विद्या-रण्यानीतलिंगप्रतिष्ठाम् आधादकार्षीत ॥ ४७ ॥

आदायाज्ञामेनयोर्बुक्कराजः
सार्धं सैन्यैः स्वां पुरीं संप्रपेदे ।

विद्यासान्द्रौ मद्यतीन्द्रौ वितन्द्रौ
पूर्णस्नेहौ शृङ्गपुर्यामधास्ताम् ॥ ४८ ॥

आदायेति । बुक्कराज एनयोर्भारतीकृष्णविद्यारण्याचार्ययोराज्ञां निर्देशं आदाय सैन्यैः साकं सार्धं स्वां पुरीं विजयनगरीं प्रपेदे प्राप्तवान् । अथानन्तरं विद्यासान्द्रौ विद्यानिबिडौ वितन्द्रौ विगतालस्यौ मद्यतीन्द्रौ भारतीकृष्णविद्यारण्याचार्यौ पूर्णस्नेहौ पूर्णः संपूर्णः स्नेहो ययोस्तौ सन्तौ शृङ्गपुर्यामास्ताम् अवर्तेताम् ॥ ४८ ॥

भारं न्यस्यन्भारतीकृष्णतीर्थो
विद्यारण्ये हृद्यविद्वद्वरेण्ये ।
अर्चन्विद्याशंकरेशं करेण
प्रापत्सोऽयं मोक्षसांम्राज्यलक्ष्मीम् ॥ ४९ ॥

भारमिति । सोऽयं भारतीकृष्णतीर्थः आचार्यः हृद्यविद्वद्वरेण्ये श्रेष्ठे विद्यारण्ये विद्यारण्याचार्ये भारं सर्वधर्मनिर्वहणभारं न्यस्यन् स्थापयन् करेण विद्याशंकरेशं अर्चयन् पूजयन्सन् मोक्षसाम्राज्यलक्ष्मीं मुक्तिमहाराज्यश्रियं प्रापत् प्राप्तवान् ॥ ४९ ॥

सिद्धिं प्राप्तं तमवकलयन्भारतीकृष्णतीर्थं
बुक्कक्षोणीपतिरपि तदैवाप लोकान्तरं सः ।

श्रुत्वा वार्तां हरिहरमहीशस्य पट्टाभिषेकं
विद्यारण्यो विजयनगरं प्रार्थितः कर्तुमैषीत् ॥

इति श्रीमत्परमहंसपरिव्राजकादिश्रीमन्नृसिंहभारतीकरकमल-
संजातसकलविद्याविशारदपण्डितपुण्डरीकमण्डली-
मार्ताण्डश्रीमत्सच्चिदानन्दभारतीस्वामिभिर्निर्मा-
पिते विद्वद्बालकश्रीमत्काशीलक्ष्मणशास्त्रि-
विरचिते गुरुवंशे महाकाव्ये

सप्तमः सर्गः ॥

सिद्धिमिति । तं भारतीकृष्णतीर्थमाचार्यं सिद्धिं विदेहकैवल्य-रूपां सिद्धिं प्राप्तं लब्धवन्तं अवकलयन् जानन्सः बुक्कक्षोणीपतिरपि तदैव लोकान्तरमवाप । तां वार्तां श्रुत्वा तदीयैः प्रार्थितो विद्यारण्य आचार्यो हरिहरमहीशस्य पट्टाभिषेकं कर्तुं विजयनगरमैषीत् । अगात् । इषुगमाविभ्यस्माल्लुङ् । मन्दाक्रान्तावृत्तम् ॥ ५० ॥

इति श्रीगुरुवंशव्याख्यायां भाववोधिन्यां
सप्तमः सर्गः ॥

